॥ श्रीः ॥

श्रीविश्वनाथो विजयतेतराम् ।

# परिभाषेन्दुशेखरः

श्रीमन्महामहोपाध्यायनागोजीभट्टविरचितः

—————०***०—————

काशीस्थराजकीयसंस्कृतप्रधानपाठशालाध्यापक-
पटवर्धनोपनामकतात्याशास्त्र्यपराभिधान-
श्रीरामकृष्णशास्त्रिणा निर्मितेन
भूतिनामकतिलकेन
विभूषितः

————

पटवर्धनोपनामकनारायणशास्त्रिणा संशोध्य

काश्यां

————

'राजराजेश्वरी'नाम्नि मुद्रायन्त्रे संमुद्र्य
प्रकाशितः ।

———



संवत् १९५४

॥ श्रीगणेशाय नमः ॥

नत्वा साम्बं शिवं ब्रह्म नागेशः कुरुते सुधीः ।
बालानां सुखबोधाय परिभाषेन्दुशेखरम् ॥ १ ॥

---

श्रीगणेशाय नमः । प्रणम्य श्रीविश्वनाथं रामकृष्णः सतां मुदे । तनोति भूतितिलकं परिभाषेन्दुशेखरे ॥ सत्स्वपि महाभाष्यकैयटाद्याकरग्रन्थेषु परिभाषार्थतत्त्वप्रतिपादकेषु प्रतिपित्सूनां प्रतिपत्तिसौकर्यायेमं ग्रन्थमारभमाणोत्र श्रोतॄणां प्रवृत्तये ऽनुबन्धचतुष्टयं प्रदर्शयन् विघ्नोच्छेदपूर्वकसमाप्तये कृतं शिष्टाचारानुमितश्रुतिभाष्यादिबोधितेतिकर्तव्यताकं मङ्गलं शिष्यशिक्षायै अभ्यासशालिनामनुषङ्गतो मङ्गलाय च रचयति । नत्वेति । अनावृतस्य सविकल्पकाविषयत्वासंभवादाह । साम्बेति । अम्बा प्रधानं तया शबलितमित्यर्थः । यद्वा । अम्बा पार्वती तत्सहितं शिवं विश्वेश्वरं ब्रह्म तत्स्वरूपमिति । यद्वा अम्बयति जीवयतीत्यम्बोत्पादनशक्तिः शेतेस्मिन् जगदितिव्युत्पन्नशिवशब्देन संहारशक्तिरुच्यते ताभ्यां सहितं ब्रह्म बृंहयति पालयतीति व्युत्पत्त्या ब्रह्मपदेन पालनशक्तिमद् गृह्यते इति शक्तित्रयविशिष्टमित्यर्थः । यद्वा । अम्बयतीत्यम्बो विष्णुः शिवः शंकरः ताभ्यां सहितं ब्रह्म ब्रह्माणं नत्वेत्यर्थः । यद्वा । अम्बा माता सतीदेवी तया सहितं शिवं शिवभट्टं स्वपितरं ब्रह्मस्वरूपिणं नत्वेत्यर्थः । न च मातृरूपार्थस्य सनिरूपकत्वेन शिवभट्टनिरूपितमातृत्वस्यैव स्वरसतः प्रतीतेः सतीदेवीसाहित्यमनुपपन्नमिति वाच्यम् । गोत्रवर्गे पितामह्याः सर्वतः श्रैष्ठ्येन तन्नमनेपि क्षतिविरहात् । अत एव सत्स्वपि गोत्रजान्तरेषु तस्या एव प्रथमभागार्हत्वेन धर्मशास्त्रादौ प्रसिद्धिः । किं च स्वनिरूपकार्थबोधकपदसमभिव्याहृतषष्ठीस्थले स्वप्रकृत्यर्थनिरूपिततादृशार्थग्रहणेपि साहित्यबोधकपदसमभिव्याहारे उपस्थितत्वाविशेषेण साहित्यानुयोगिनिरूपितमातृत्वग्रहण-

प्राचीनवैयाकरणतन्त्रे वाचनिकान्यत्र पणिनीयतन्त्रे ज्ञा-

---

इव नतिकर्तृनिरूपितमातृत्वग्रहणेपि क्षतिविरहः। बाल्यदशायां मृतमातृकस्य नागेशस्य पितामह्यैव पालनं कृतमतो ऽत्र कृतज्ञेन तेन तन्नमनं कृतमिति कश्चित्। केचित्तु परिभाषेन्दुशेखरमित्यावर्त्य धातूनामनेकार्थत्वात् परितो भासमानो द्विकलात्मक इन्दुः शेखरे यस्य तं चन्द्रशेखरं शिवं नत्वेत्यर्थ इति वदन्ति। नागेश इति । आत्मनामेति निषेधस्तूच्चारणविषयो न लेखनविषय इति बोध्यम् । अत एव गोनर्दीय आह भट्टोजीदीक्षितकृतिरित्यादिस्तत्र तत्र ग्रन्थकृतां लेखः संगच्छते । यत्तु कूपखानकन्यायेन समाहितं केश्चित्, तन्न। मङ्गलस्य विघ्नध्वंसादिप्रयोजकत्वस्यानुमितश्रुत्यादिबोधितत्वेपि आत्मनामोच्चारणजन्यदुरितध्वंसप्रयोजकत्वस्याप्रसक्तेः । यदप्यात्मनामेतिनिषेधस्य स्वकीर्त्यनुवृत्तये स्वनामग्रहणस्य शिष्टाचारानुगृहीतत्वात् तद्बोधकानुमितस्मृत्या बाध इति । तदपि न । स्वकीर्त्यनुवृत्तये स्वनामलेखनस्य शिष्टाचारविषयत्वेपि उच्चारणस्य तद्विषयत्वाभावेन स्मृतिबाधकल्पनस्याप्रामाणिकत्वात् । धर्मिग्राहकमानेन स्वकीर्तिप्रयोजकताया एवानुमितस्मृतितो लाभेन स्वकीर्तिप्रयोजकत्वदुरितानुकूलत्वयोर्विरोधाभावेन बाधस्योक्तिसंभवस्याप्यभावाच्च। यथा चिकित्साशास्त्रस्थेन रोगविशेषवत्पुरुषोद्देश्यकेन सुरापानविधिना सह न धर्मशास्त्रस्थसुरापाननिषेधस्य बाध्यबाधकभावः । अत एव यागीयपशुवधजन्यदुरितदूरीकरणाय प्रायश्चित्ताचरणमपि शिष्टव्यवहारविषयो दृश्यते । वस्तुतस्तु स्वकीर्त्युद्देशेन स्वनामोच्चारणस्य शिष्टाचारविषयत्वमेवाप्रामाणिकमिति ध्येयम् । केचित्तु निषेधोयं पारिभाषिकनामविषयो न यौगिकनामविषयः नागेश इति यौगिकं नामेति न दोष इति, तन्न । पारिभाषिकनामान्तरानुपलम्भात् संकोचे प्रमाणाभावाच्च । केचित्तु नागानामीशः प्रभवः तान् पतञ्जलीन्नत्वेति द्वितीयान्तं वर्णयन्ति। केचित्तु निषेधस्य द्वादशेह्नि पित्रादिकृतनामपरत्वात् व्यवहारेषु नागोजीभट्टेतिनाम्नः प्रसिद्धत्वेन नागेश इति नाम्नस्तत्त्वे मानाभावः । अत एव ग्रन्थान्ते नागोजीभट्टकृत इति स्वनामोल्लेखो, नागेश इति तु नागस्य पतञ्जलेः ईर्लक्ष्मीस्तां श्यति तनूकरोतीति गूढाभिप्रायकं स्वविशेषणमुपादत्ते न तु नागेश इति स्वनामेति वदन्ति । अन्ये तु नागेशः पतञ्जलिरेवैतद्ग्रन्थ-

कर्ता ऽहं तु केवलं भाष्यादित उपयुक्तवाक्यानि एकत्र संघटयामि लेखक इवेति ग्रन्थकर्तुः प्रौढतां वर्णयन्ति । कुरुतइति । यत्तु सुखबोधस्य बालनिष्ठत्वेन कर्तृगामित्वाभावान्नात्मनेपदप्रसक्तिरिति तन्न। बालनिष्ठसुखबोधजन्यापूर्वस्य फलतयाभिप्रेतत्वेन तस्य च कर्तृगामितया दोषाभावात् । यद्वा प्रकथने उपयोगे वा गन्धनावक्षेपणेत्यात्मनेपदम्। सुधीरिति। प्रेक्षावतां स्वग्रन्थस्यानुपादेयत्वनिरासायैतत् न तु आत्मप्रशंसनायेति बोध्यम् । बालानां भाष्यकैयटाद्याकरग्रन्थतो निखिलपरिभाषार्थनिर्णयासमर्थानां व्युत्पन्नानामित्यर्थः । सुखबोधाय। सुखेनाल्पायासेनैवाखिलपरिभाषार्थतत्त्वबोधायेत्यर्थः । परिभाषेन्दुशेखरम्। परिभाषा इन्दुरिव प्रकाशकत्वेन शेखरे यस्य तं ग्रन्थं, परिभाषार्थस्य मुख्यप्रतिपाद्यत्वेन मस्तकधृतत्वारोपः । अत्र बालानामित्युक्त्या निरुक्तबालानामधिकारित्वं सुखबोधायेत्यनेन तादृशसुखबोधस्य प्रयोजनत्वं परिभाषेन्दुशेखरमित्युक्त्या च परिभाषार्थनिर्णयस्य विषयत्वं चेत्यनुबन्धत्रयं सूचितं संबन्धरूपतुरीयानुबन्धश्च स्फुटत्वान्नोक्तः । अनुबन्धत्वं प्रवृत्तिप्रयोजकज्ञानविषयत्वम् । अधिकारिणः प्रवृत्तिप्रयोजककृतिसाध्यत्वप्रकारकज्ञानविषयतया प्रयोजनविषययोश्च तादृशेष्टसाधनत्वप्रकारकज्ञानविषयीभूततया च लक्षणसमन्वयः॥१॥यद्यपि परिभाषेन्दुशेखरमित्यनेन विषयो दर्शितस्तथाप्यत्र सर्वासां परिभाषाणां व्याख्यानाभावेन न्यूनतापत्तिरतस्तां परिहरन् व्याख्येयपरिभाषाः प्रतिजानीते। प्राचीनेति । प्राचीनवैयाकरणानामिन्द्रादीनां तन्त्रे शास्त्रे वाचमिकानि वचनरूपाणि विनयादित्वात्स्वार्थे ठक्। ज्ञापकन्यायाभ्यां सिद्धानि प्रमितानि भाष्यवार्तिकयोः भाष्यवार्तिककारयोरुपनिबद्धानि अभिप्रेतानि यानि परिभाषारूपाणि तानि अत्र ग्रन्थे व्याख्यायन्ते। व्याख्यानं च प्रकृतशास्त्रप्रवृत्तिनिवृत्त्युपयोगित्वेन प्रतिज्ञानविशिष्टमत्र विवक्षितं तेनाकृतव्यूहाइत्याद्युपन्यासेपि न प्रतिज्ञाविरोधः । नन्वत्र ज्ञापकन्यायसिद्धानीतिविशेषणेन वाचनिकानामसंग्रह इति चेद्, अत्र के चित् प्रायेणेति शेषं कृत्वा वाचनिकीनां संग्रहमाहुः। अन्ये तु ज्ञापकन्यायशब्दावर्शआद्यजन्तौ ज्ञापकन्यायसिद्धपरौ सिद्धशब्दश्च वाचनिकपरस्तेन निर्दिश्यमानस्येत्यादिवाचनिकीनां संग्रह इत्याहुः । सदाशिवभट्टास्तु भाष्यवार्तिकयोरिति पृथक् कोटिस्तेन ज्ञापकन्यायसिद्धानां भाष्याद्यनुपन्यस्तानामकृतव्यूहाइत्यादिपरिभाषाणां ज्ञापक-

पकन्यायसिद्धानि भाष्यवार्त्तिकयोरुपनिबद्धानि यानी परिभाषारूपाणि तानि व्याख्यायन्ते ॥

ननु लण्अइउण्सूत्रयोर्णकारस्यैवोपादानेनाणिण्ग्रह-

न्यायासिद्धानां केवलवाचनिकीनां च संग्रहमाहुः। केचिच्च वाचनिकानीत्यस्य आवृत्त्या तासां संग्रहमाहुः। केचिच्च प्राचीनवैयाकरणतन्त्रे वाचनिकान्यपि पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धान्यपि यानि भाष्यवार्तिकयोरुपनिबद्धानि तान्येवात्र व्याख्यायन्तइति व्याचख्युः। वस्तुतस्तु ज्ञापकन्यायासिद्धानि व्याख्येयपरिभाषारूपाणि नैव सन्ति प्राचीनेत्यादेर्यथाश्रुतार्थ एव समीचीनः। यस्मिन्विधिरित्यादौ वाचनिक्येपेत्यादुच्चल्लेखस्तु भाष्ये एवस्यां ज्ञापकन्यायौ नोपन्यस्तौ केवलं वचनरूपेण पठितेत्येवार्थो न तु तौ न स्त इति। व्याख्येयपरिभाषात्वं च संकेतग्राहकभिन्नत्वे सति शब्दधर्मिकसाधुत्वप्रकारकशास्त्रजन्याप्रामाण्यज्ञानानास्कन्दितबोधे सहकारित्वेन मुन्यभिप्रेतत्वे सति पाणिन्युच्चरितभिन्नत्वं, षष्ठीस्थानेयोगेत्यादीनां पाणिन्युच्चरितत्वेपि निर्दिश्यमानस्यादेशा भवन्तीत्यानुपूर्वीमद्वाक्यस्य पाणिन्यनुच्चारितत्वान्न दोषः। कासांचिदनेवंविधत्वेपि पाणिनिप्रयत्नानुमितत्वसादृश्यादारोपितं परिभाषात्वमनुसंधेयम्। अथात्र शास्त्रत्वसंपत्तिमन्तरा बाधचिन्ताया असंभवात् शास्त्रत्वसंपादनोद्देशनामकं व्याख्यानतइत्यारभ्यैकदेशविकृतमित्यन्तं प्रथमं शास्त्रत्वसंपत्तौ च बाधचिन्ताया उचितत्वात्परनित्येत्याद्युभयनिर्देशइत्यन्तं बाधबीजनामकं द्वितीयं पूर्वोक्तप्रकरणद्वयावशिष्टानामर्थानां बोधकत्वादेवान्ते निरूपणार्हं शास्त्रशेषनामकं तृतीयं प्रकरणं सन्दर्भशुद्धिमनुरुध्य क्रमेण ग्रन्थकार उपनिबबन्ध। तत्र च तात्पर्यनिर्णायकप्रमाणनिरूपणात् सर्वशास्त्रोपकारकत्वेन वर्णसमाम्नायस्थमहेश्वरप्रणीतणकारानुबन्धज्ञापितत्वेन चाभ्यर्हितत्वात् प्रथममुपन्यासमर्हन्तीं परिभाषां व्याचिख्यासुरवतारयति। नन्विति। णकारेति। णपदं विद्यमानणकारपरं तेन उक्तसूत्रयोर्विद्यमानौ यौ णकारौ तद्द्वयेत्यर्थः। एतेन प्रत्येकं सूत्रे णद्वयाभावेन द्वन्द्वानुपपत्तिरित्यपास्तम्। अणिण्ग्रहेणषु तद्ग्राहकप्रत्याहारपदेषु संदेहात् तात्पर्यसंदेहात् अनिर्णयः तात्पर्यसंदेहाच्छाब्दबोध एव नेति मते शाब्दबोधाभावः। तात्पर्यसंदेहात्संदेहात्मकः शाब्दबोध इति मते निर्णयात्मकशाब्दबोधा-

णेषु संदेहाददनिर्णयो ऽत आह ॥

**व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम् ॥ १ ॥**

विशेषस्यान्यतराद्यर्थरूपस्य व्याख्यानाच्छिष्टकृतात् प्रति-
भाव इत्यर्थः । नन्वादिरन्त्येनेति शास्त्रेणाद्यन्ताक्षिप्तसमुदायघटकबोध्यस्यैवा-
जादिपदप्रतिपाद्यताया बोधितत्वेन प्रकृताकारादिणकारान्तसमुदायान्तः-
पातिवर्णबोध्यत्वरूपाण्पदसंकेततावच्छेदककुक्षौ समुदायस्याकारा-
दिणकारान्तत्वेनानुगतरूपेणैव प्रवेशात् संकेतभेदाभावेन कथं तात्पर्यसंदे-
हः । नहि पश्वादिपदं शृण्वन् किं पीतलाङ्गूलावच्छिन्नबोधतात्पर्येणाय-
मेतत्पशुपदमुदचरदुत श्वेतलाङ्गूलावच्छिन्नबोधतात्पर्येणेति कश्चित्संदि-
हानो भवति, लांगूलस्य पशुपदशक्तौ विशेषरूपेण प्रवेशाभावादिति चेत्स-
त्यम् । एवं सति पूर्वणकारस्य वैयर्थ्यापत्त्येदृशस्यानुगतधर्मस्याण्पदसंकेत-
तावच्छेदकताया अनभ्युपगमेन त्रिकवृत्तिचतुर्दशवृत्त्योर्व्याप्यव्यापकयो-
रन्यतमत्वयोरेव संकेततावच्छेदकतायाः कल्पनेन नानाशक्तिकत्वात्संदेहः
स्यादेवेति बोध्यम् । वस्तुतस्तु अन्त्येत्सदृशेन सहित आदिसदृशः स्वघ-
टकानुयोगिकसादृश्यप्रतियोगित्वेन विवक्षितवर्णनिष्ठान्ततानिरूपकस्य स्व-
घटकानुयोगिकसादृश्यप्रतियोगित्वेन विवक्षितवर्णनिष्ठादितानिरूपकस्य स-
मुदायस्य घटकानां संज्ञेति आदिरन्त्येतिसंग्राहकवाक्यार्थस्य सर्वाभिमत-
त्वेन सूत्रस्थाण्घटकणस्य अइउण्सूत्रस्थणकारसदृशत्वेन विवक्षायामका-
रस्य अइउण्सूत्रघटकाकारसदृशत्वेन विवक्षायां च तदण्पदशक्यतावच्छेदक-
कुक्षौ अइउइत्येतत्रितयवृत्तिसमुदायत्वस्य, उक्तणकारस्य लण्घटकणका-
रसदृशत्वेन विवक्षायां च तादृशणान्तचतुर्दशवर्णसमुदायवर्तिनःसमुदाय-
त्वस्य चप्रवेशात् पीलुत्वस्येवात्रशब्दस्यैक्येप्यर्थस्यभेदात् शक्यतावच्छेदकभे-
देन संकेतभेदात् तात्पर्यसंदेहः समुचित एवेति दिक् । अन्यतरादीति ।
आदिपदं बहुकोटिकसंशये अन्यतमपरिग्रहाय । शिष्टकृतादिति । शिष्टपदे-
न निखिलशब्दधर्मिकसाधुत्वप्रकारकयथार्थज्ञानवान् इह गृह्यते । हि यत

पत्तिर्निश्चयो यतः संदेहाच्छास्त्रमलक्षणमननुष्ठापकं लक्षणमलक्षणं तथा न शास्त्रस्य निर्णयजनकत्वौचित्यादित्यर्थः ॥ असंदिग्धानुष्ठानसिद्ध्यर्थे ऽत्र शास्त्रे संदिग्धोच्चारणरूपाचार्यव्यवहारेण संदेहनिवृत्तेर्व्याख्यानातिरिक्तनिमित्तानपे-

---

इति । हिशब्दस्त्वर्थइति तु परे । अननुष्ठापकमिति । शब्दविशेषधर्मिकसाधुत्वप्रकारकनिश्चयजनकत्वाभाववन्नेत्यर्थः । असंदिग्धेति । संदिग्धं संदेहो भावे क्तः न विद्येत संदिग्धं संदेहो यस्मिन्नित्यर्थः । संदिग्धेति । भावक्तान्तप्रकृतिकार्शआद्यजन्तं संदेहजनके लाक्षणिकं वा तथा च संदेहरहितप्रवृत्तिप्रयोजके ऽत्र शास्त्रे संदेहजनकाइउण्घटकणकारकर्मकोच्चारणरूपाचार्यव्यवहारेण निरुक्तार्थरूपा व्याख्यानतइति परिभाषा ज्ञाप्यतइत्यर्थः पर्यवस्यति । संदेहानिवृत्तेर्व्याख्यानापेक्षत्वमिति परिभाषास्वारसिकार्थं विहाय व्याख्यानातिरिक्तनिमित्तानपेक्षत्वमिति वक्रोक्त्या प्रतिपादनं तु यत्र व्याख्यानेन तदतिरिक्तप्रमाणेन वा सन्देहनिवृत्तिः प्राप्ता तत्र व्याख्यानाज्जायमानसंदेहनिवृत्तेरेव प्रकृतशास्त्रप्रवृत्तिप्रयोजकत्वमिति बोधनाय । अत एव हृदयस्येतिसूत्रे अणुच्चारणसामर्थ्यात् लेखेतिघञन्तेतात्पर्यं प्राप्नोति तथापि ज्ञापकपरभाष्यव्याख्यानेन अणन्त एव लेखपदस्य तात्पर्यमवधार्यते न तु घञन्ते । तथा च यथोत्तरं मुनीनां प्रामाण्यमितिवचनमप्येतत्सिद्धार्थानुवादकमेव । यथोत्तरंमुनीनांप्रामाण्यमित्यस्योत्तरोत्तरमुन्यभिप्रेतेर्थे पूर्वपूर्वमुनीनां तात्पर्यमित्येवार्थो न तु पूर्वमुनीनामप्रामाण्यमिति । अन्यथैतद्दृष्टान्तेन संपूर्णशास्त्रस्याप्रामाण्यापत्तिः। यत्तु शेखरकृतोक्तं धिन्विकृण्व्योरचेत्यकारविधानमेतज्ज्ञापकमिति तन्न । स्वस्य स्वप्रामाण्यसाधकत्वानौचित्यात् । मम तु शिवोच्चरितणकारानुबन्धेन व्याख्यातृवचसः प्राबल्यबोधनान्नदोषः । केचित्तु, व्याख्यातृवचसां व्याख्येयवचनार्थतात्पर्यनिर्णायकत्वस्यौत्सर्गिकत्वेन तदर्थं परिभाषारम्भस्तज्ज्ञापकं च विफलं नहि क्षुन्निवृत्तये भोजनं कार्यमिति वचनमाचार्येण निरमायि। यथोत्तरं मुनीनामित्यर्थस्तु न परिभाषासाध्यस्तस्यार्थस्य पाणिनिना धिन्विकृण्वीतिसूत्रस्थाकारेण ज्ञापितत्वात् । भाष्यकारादिभिर्मद्वचसो यत्रार्थे तात्प-

क्षत्वं बोध्यतइति यावत् ॥ तेनाणुदित्सवर्णस्यचेत्येतत्प-रिहाय पूर्वेणाण्ग्रहणं, परेणेण्ग्रहणमिति लण्सूत्रे भाष्ये स्पष्टम् ॥ १ ॥

तत्र संज्ञापरिभाषाविषये पक्षद्वयमित्याह ॥

## यथोद्देशं संज्ञापरिभाषम् ॥ २ ॥

## कार्यकालं संज्ञापरिभाषम् ॥ ३ ॥

उद्देशमनतिक्रम्य यथोद्देशम् । उद्देश उपदेशदेशः । अ-धिकरणसाधनश्चायम् ॥ यत्र देशउपदिश्यते तद्देश एव वाक्यार्थबोधेन गृहीतशक्त्या गृहीतपरिभाषार्थेन च सर्वत्र

---

र्थं बोधितं सोर्थो ममाभिप्रेत इति यथोत्तरमित्यत्र स्वसंमतिरुक्ता । व्या-ख्यानतइत्यतः स्वरसतस्तादृशार्थप्रतीतिः निरुक्तार्थे ज्ञापितेपि णकारस्य स्वांशे ऽचारितार्थ्यं चेति वदन्तीतिदिक् । सकलपरिभाषाविषयं परिभाषाद्वयं वक्तुमुपक्रमते । तत्रेति । शास्त्रे इत्यर्थः । तेन शास्त्रत्वावच्छेदेन संज्ञापरि-भाषाविषयकं पक्षद्वयं न तु प्रत्येकं संज्ञात्वाद्यवच्छेदेनेति भावः।उद्देशमनति-क्रम्येति । परावरयोगे चेति क्त्वा यथासादृश्यइत्यव्ययीभावः । गृहीतश-क्त्येति । इदं संज्ञाविषयकम् । संज्ञाशास्त्रजन्यवाक्यार्थबोधरूपशक्त्यनुभवोपो-द्बलितसंस्कारेणैव तत्तत्सांकेतिकाविधिशास्त्रघटकपदानुभवोद्बुद्धेनोपस्थि-तिशाब्दबोधयोर्निर्वाहे विधिदेशे पुनरेतत्प्रतिसंधानस्य नोपयोग इति भावः। अथैवं संज्ञाविषये कार्यकालपक्षानुत्थितिः प्रदर्शितदिशैव उपस्थित्यादेरु-पपत्त्या विधिप्रदेशे संज्ञाशास्त्रजन्यवाक्यार्थस्यानुपयोगात् इति चेन्न । अ-नुभवेनोपस्थित्यौपयिकसंस्कारे जननीये अपेक्षाधियो ऽपि सहकारितया यस्य श्रोतुः यत्संज्ञाशास्त्रजनितबोधविषये उपेक्षाबुद्धिर्जाता तत्पारिभाषि-कपदस्य तदर्थानुभावकतायास्तत्तद्विधिप्रदेशे ऽप्रसक्त्या पुनस्तत्र संज्ञाशास्त्र-जन्यबोधस्यावश्यकत्वात् । एवं चापेक्षाधीसहकृते तत्तद्वाक्यार्थबोधे सति दृ-

शास्त्रे व्यवहारः। देशश्चोच्चारणकाल एवात्र शास्त्रे व्यवह्रियते॥ तत्तद्वाक्यार्थबोधे जाते भविष्यति किंचिदनेन प्रयोजनमिति ज्ञानमात्रेण संतुष्यद्यथाश्रुतग्राहिप्रतिपन्नपेक्षोऽयं पक्ष इतीद्धूत्सूत्रे कैयटः। केचित्तु परिभाषाविषये तस्मिन्नित्यादिवाक्यार्थबोधे सप्तमीनिर्देशादि क्वेति पर्य्यालोचनायां सकलतत्तद्विध्युपस्थितौ सकलतत्तत्संस्काराय गुणभेदं परिकल्प्यैकवाक्यतयैव नियमः। कार्य्यकालपक्षे तु त्रिपाद्यामप्युपस्थितिरिति विशेषः॥ एतदेवाभिप्रेत्याधिकारो नाम त्रिप्रकारः कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति यथा प्रदीपः सुप्रज्वलितः सर्वं वे-

---

ढतरसंस्कारस्य जननात् वारंवारं तत्तद्बोधस्यानपेक्षितत्वेनापेक्षाधिय एव यथोद्देशपक्षबीजतोपेक्षाधियः कार्यकालपक्षबीजता च पर्यवस्यति। स्वमतमाह। केचिदिति। सकलतत्तदिति। यत्संस्कारउद्बुद्धस्तत्सकलेत्यर्थः। तद्विषयएव च यथोद्देशपक्ष इति भावः।गुणभेदं गुणशास्त्रविधेयभेदम्। एकवाक्यतयैवेति। पदैकवाक्यतयेति भावः। एकवाक्यता च त्रिधा पदैकवाक्यता, अर्थैकवाक्यता, वाक्यैकवाक्यता चेति। तस्मिन्नितिशास्त्रस्य पदोपस्थापकत्वपक्षे इकोयणचीत्यादिसप्तम्यन्तपदघटितशास्त्रैःसहस्वघटकपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकपदघटितत्वरूपा आद्या,तस्यार्थोपस्थापकत्वपक्षेविधिशास्त्रीयाचीत्यादिसप्तम्यन्तपदानां लक्षणया अजव्यवहितपूर्वत्वाद्यर्थतात्पर्यकस्वरूपेच स्वोपस्थाप्यार्थनिष्ठविषयतानिरूपितविषयताप्रयोजकपदघटितत्वरूपा द्वितीया।उपजीव्योपजीवकभावापन्नबोधप्रयोजकत्वरूपा तृतीया। यथा क्ङितिचेत्यादिनिषेधशास्त्राणांसार्वधातुकेत्यादिनिषेध्यशास्त्रीयसार्वधातुकेत्यादिपदसंबंधिक्ङिद्भिन्नसार्वधातुकाद्यर्थनिर्णायकत्वरूपा। कार्यकालेत्विति।तुरेवार्थे। कार्यकाले एव त्रिपाद्यामुपस्थितिर्नान्यपक्षे इत्यर्थः। त्रिपाद्यामपीति। अपिना सपादसंग्रहः। वस्तुत इदं शास्त्रत्वावच्छिन्नोद्देश्यताकपरिभाषाविषयकं शास्त्रत्वसंपादकपरिभाषाणां तु पक्षद्वयेपि त्रिपाद्यामुपस्थितिः। तत्परि-

श्माभिज्वलयतीति षष्ठीस्थाने इति सूत्रे भाष्यउक्तम् ॥ अधिकारशब्देन पारार्थ्यात्परिभाषाप्युच्यते । कश्चित्परिभाषारूप इति कैयटः ॥ दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशक एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत्तात्पर्यम् । एतच्च पक्षद्वयसाधारणं भाष्यं पक्षद्वयेऽपि प्रदेशैकवाक्यतााया इतः प्रतीतेः ॥ तत्रैतावान्विशेषः । यथोद्देशे परिभाषादेशे सर्वविधिसूत्रबुद्धावात्मभेदं परिकल्प्य तैरेकवाक्यता परिभाषाणा-

---

भाषाप्रवृत्तेः प्राक् त्रैपादिकस्य शास्त्रत्वाभावेन पूर्वत्रासिद्धमित्यनेनासिद्धत्वप्रतिपादनासम्भवात् । त्रिःप्रकार इति । मूलोक्त एकः । द्वितीयो यथा रज्ज्वायसा वा बद्धं काष्ठमनुकृष्यतेतद्वदनुकृष्यतेचकारेणेति । चकारमन्तरापि योगेयोगे उपतिष्ठतइति तृतीयोऽङ्गस्येतिसूत्ररूपः । अधिकारत्वं च स्वदेशे लक्ष्यसंस्कारोपयोगिविधिशास्त्रीयवाक्यार्थबोधोपकारकवाक्यार्थाननुभावकत्वे सति विधिशास्त्रीयलक्ष्यसंस्कारोपयोगिवाक्यार्थबोधप्रयोजकत्वम् । संज्ञादिवारणाय सत्यन्तं, शेषइत्यत्राव्याप्तिवारणाय वाक्यार्थे विधिशास्त्रीयवाक्यार्थबोधोपकारकेतिविशेषणं सत्यन्ते । एवम् । दीपवत् । एतत् । परिभाषाशास्त्रम् । स्वबुद्धीति । स्वविधेयबुद्धीत्यर्थः । यथोद्देशपक्षाभिप्रायकमिदं भाष्यमिति कैयटमतं खण्डयति । एतच्चेति । यथोद्देशपक्षाभिप्रायकत्वे तु परिभाषाविषये कार्यकालपक्ष एव न स्यात् । परिभाषामात्रस्याधिकारपदेन ग्रहणात् । तदाह । पक्षद्वयेपीति । इतः । भाष्यात् । आत्मभेदम् । परिभाषाविधेयभेदम् । परिकल्प्य बोद्धृभिः परिभाषाणां तैर्विधिशास्त्रैः सहैकवाक्यता क्रियतइत्यर्थः । तैः विधिशास्त्रैरिति कर्तृपदं वा । अत्र क्रियतइत्यध्याहारान्न समानकर्तृकत्वहानिः । व्यवहर्तॄणामिति । स्वसम्बन्धिनः कस्य चित्तत्र गमनेपि न स्वस्य तद्देशस्थत्वं भवति सुतरां तु तद्देशीयत्वं यथा दीपप्रभायास्तत्र गमनेपि न दीपस्य तद्देशस्थत्वमेवं परिभाषाया अपि तत्र देशे स्वविधेयगमनेपि न तद्देशस्थत्वमित्यर्थः । वस्तुतः

म् । तदुक्तं क्ङिति चेति सूत्रे कैयटे । यथोद्देशे प्रधानान्यात्मसंस्काराय संनिधीयमानानि गुणभेदं प्रयुञ्जतइति ॥ कार्यकाले तु तत्तद्विधिप्रदेशे परिभाषाबुद्ध्यैकवाक्यतेति । अत्रैकदेशस्थ इत्यनेन तत्रतत्र तद्बुद्धावपि तत्तद्देशस्थत्वं वारयति, यथा व्यवहर्तॄणां कार्यार्थमनेकदेशगमनेपि न तत्तद्देशीयत्वव्यवहारः किं त्वभिजनदेशीयत्वव्यवहार एव, तद्वत् । निषेधवाक्यानामपि निषेध्यविशेषाकांक्षत्वाद्विध्येकवाक्यतयैवान्वय इति परिभाषासादृश्यात्परिभाषात्वेन व्यवहारः क्ङिति चेत्यत्र भाष्ये । तत्रैकवाक्यता पर्युदासन्यायेन । प्रसज्यप्रतिषेधेऽपि तेन सह वाक्यार्थबोध-

---

परिभाषाया अचेतनत्वेन गमनासम्भवात्तद्विधेयस्मरणमात्रेण तत्र वर्तमानत्वबुद्धेरसम्भव इति प्रतिपादयति । तत्र तत्र तद्बुद्धावपीति । यत्तु प्रधानस्य राज्ञो नाप्रधानभृत्यादिना ऽऽकर्षणं, नहि प्रयाजादिवाक्यैर्दर्शपौर्णमासादिवाक्यमाकृष्यतइति परिभाषाशास्त्रेण कथं विधिशास्त्रमाकृष्येतेति नागेशमतमयुक्तमिति । तदयुक्तम् । परिभाषादेशे विधिसूत्रोपस्थितावपि तेन तदाकर्षणाभावात् । अत एव ग्रन्थकर्त्रा 'तत्रतत्र तद्बुद्धावपी' त्याद्येवोक्तं नहि भृत्यादेरप्रधानस्य राजविषयकज्ञानं प्रति तादात्म्येन प्रतिबन्धकत्वं ऋते भवतः कोप्यभ्युपैति प्रत्युत उभयाकाङ्क्षारूपप्रकरणात्मकचतुर्थप्रमाणेन प्रयाजादिवाक्यार्थे निर्णीते भाव्याकाङ्क्षायां तत्र दर्शपूर्णमासप्रधानवाक्योपस्थित्यैव तयोरङ्गाङ्गीभावः सर्वसम्मतः । ननूक्तपक्षद्वयस्य संज्ञापरिभाषामात्रविषयकत्वे क्ङितिचेतिसूत्रे कार्यकालपक्षोक्तिरसंगतेत्यतआह । निषेधवाक्यानामिति । नञो भेदपरतया क्ङिति नेत्यस्य विधावुपस्थितौ क्ङिद्भिन्नसार्वधातुकेत्यादिक्रमेणार्थे निरुक्तपदैकवाक्यतेत्यर्थः । ननु प्रथमान्तान्यसमभिव्याहृतासमस्तनञो न भेदबोधकत्वमत आह । प्रसज्येति । एकवाक्यतेति । वाक्यैकवाक्यतेत्यर्थः । निषेधशास्त्रस्य निषेध्यशास्त्रीयप-

**मात्रेणैकवाक्यताव्यवहारः ॥ संज्ञाशास्त्रस्य तु कार्यकाल-पक्षे न पृथग्वाक्यार्थबोधः किन्तु प्रदेशवाक्येन सहैव ।**

---

द्धर्मिकार्थविशेषविषयकबोधजनकत्वप्रकारकतात्पर्यग्राहकत्वात् विषयता-नामुपजीव्योपजीवकभावो बोध्यः । संज्ञाशास्त्रस्य त्विति । तुरप्यर्थे । न पृथगिति । लक्ष्यसंस्कारोपयोगी नेत्यर्थः । अत्रायं विवेकः । कार्यका-लपक्षे वृद्धिरादैजित्यादौ वाक्यार्थबोधे सति तस्मिन्नैष्फल्यग्रहेणोपेक्षाबुद्ध्या तदभ्यासाभावेन दृढतरसंस्काराभावात् मृजेर्वृद्धिरित्येतद्वाक्यार्थबोधकाले उद्बोधकान्तरसत्वेपि संस्कारलोपात्तदुद्बोधाभावेन मृजेर्वृद्धिरित्यस्य देशे वृद्धिरादैजित्यस्य पुनर्वाक्यार्थबोधात् तेन सह पदैकवाक्यता । अत्र पक्षे विधिदेशएव संज्ञाशास्त्रस्य सफलवाक्यार्थबोधात् विधिदेशीयत्वमेव । अत एवायादिभ्यः परैव प्रगृह्यसंज्ञेति भाष्यं सङ्गच्छते। अमी इत्यत्र चाणोप्रगृ-ह्यस्येत्येतदेकवाक्यतापन्नादसोमादित्येतद्दृष्ट्यां मीत्वस्य सिद्धत्वेन प्रगृ-ह्यसंज्ञायां नानुनासिकः । यथोद्देशपक्षे तु वृद्धिरादैजित्यस्य वाक्यार्थबोध-रूपे शक्तिग्रहे वृत्ते भविष्यति किंचिदनेन प्रयोजनमिति भाविफलानुस-न्धानादपेक्षाबुद्ध्या आचार्यवाक्ये विश्वासवता छात्रेण तदभ्यासेन दृढतर-संस्कारेण मृजेर्वृद्धिरित्येतद्वाक्यार्थबोधकाले एकसम्बन्धि ज्ञानमितिविधया सं-स्कारोद्बोधे सत्यादैचामुपस्थितौ वृद्धिरादैजित्येतद्वाक्यार्थबोधस्य पुनर्नापेक्षा। सफलवाक्यार्थबोधाधिकरणदेशस्यैव मुख्यदेशत्वव्यवहारात् अत्र पक्षे सं-ज्ञाशास्त्रस्य स्वदेशएव सफलवाक्यार्थबोधात् पाठदेशीयत्वमेव । अत एवा-गच्छतमग्नी ३ इत्यत्रेदूदेदित्येतद्दृष्ट्या प्लुतस्यासिद्धत्वेन द्विमात्रत्वात्प्रगृह्यसं-ज्ञायामणोप्रगृह्येति नानुनासिकः । अत्र विषये कार्यकालपक्षस्वीकारे तु ईदूदेदित्यस्याणो प्रगृह्येत्येतद्देशीयत्वापत्त्या तद्दृष्ट्या प्लुतस्य सिद्धत्वेन द्वि-मात्रत्वाभावात्प्रगृह्यसंज्ञाभावेनानुनासिकापत्तिः । एवमेव तस्मिन्नित्यादि-परिभाषाविषये पक्षद्वयं बोध्यमिति प्राचीनमतम् । नवीनास्तु तस्मिन्नित्या-दिपरिभाषाशास्त्राणां वाक्यार्थबोधे सति सप्तमीनिर्देशादि क्वेति पर्यालो-चनायां कतिपयविध्युपस्थितौ तेन सहैकवाक्यतयान्वयबोधेन साफल्यग्रहे सति दृढतराभ्यासात् अनुपस्थितविधिविषयेपि पूर्ववत्तत्तद्विधेयोपस्थितौ नपुनर्वाक्यार्थबोधापेक्षा । परिभाषाविषयएवेद्दशजिज्ञासुसत्वे प्रमाणं

अत एवाणोऽप्रगृह्यस्येत्येतदेकवाक्यतापन्नादसोमादित्येतत् प्रति न मुत्वाद्यसिद्धम्, असिद्धत्वस्य कार्यार्थितया कार्यज्ञानोत्तरमेव तत्प्रवृत्तिः कार्यज्ञानं च प्रदेशदेश एवेति तद्देशस्थस्यासिद्धत्वात्पूर्वग्रहणेनाग्रहणात् एवं तद्बोधोत्तरमेव विरोधप्रतिसन्धानं चेति तत्रत्यपरत्वमेव विप्रतिषेधसूत्रप्रवृत्तौ बीजम् । अत एव कार्यकालपक्षे ऽयादिभ्यः परैव प्रगृह्यसंज्ञेत्यदसोमादितिसूत्रे भाष्यउक्तम् ॥ आक-

---

च निरुक्तभाष्यकैयटाद्येव । एवं शिष्यजिज्ञासया ये विधय उपस्थितास्तद्विषयएव यथोद्देशत्व,मनुपस्थितविधिविषये कार्यकालत्वं,पूर्वत्रासिद्धमित्यनेन त्रिपाद्या असिद्धत्वात्पूर्वोक्तशिष्यजिज्ञासायां सत्यामपि आचार्येण त्रैपादिकस्य नोपस्थितिः कृतात्रापि भाष्यादिव्यवहार एव शरणमिति प्राहुः । अत एवेति । प्रदेशएव सफलवाक्यार्थबोधेन प्रदेशस्य मुख्यदेशत्वादेवेत्यर्थः। अत एवेति । सफलवाक्यार्थबोधाधिकरणमुख्यदेशमादाय विप्रतिषेधशास्त्रप्रवृत्तिस्वीकारादेवेत्यर्थः । अयादिभ्यः परैवेति । अत्र पक्षे अदसोमादित्यस्य प्लुतप्रगृह्याइत्येतदेकवाक्यत्वादित्यर्थः । यथोद्देशपक्षएवेति । अत्र मानं चापादानमुत्तराणि कारकाणि बाधन्तइति भाष्यम् । अत्र विषये कार्यकालपक्षस्वीकारे तु अपादानसंज्ञाया अपादाने पञ्चमीत्येतदेकवाक्यतापन्नाया एव कर्मणिद्वितीयेत्येतदेकवाक्यतापन्नकर्मसंज्ञापेक्षया परत्वेन कर्मादिसंज्ञानां परत्वादपादानसंज्ञाबाधकत्वकथनमसंगतं स्यात् । तत्फलं तु राज्ञ इत्यत्र नलोपाभावः । अल्लोपोन इत्येतदेकवाक्यतापन्नयचिभमित्येतद्दृष्ट्या नलोपः प्रातिपदिकेत्येतदेकवाक्यतापन्नस्वादिष्वसर्वनामस्थानइत्यस्यासिद्धत्वेन नलोपो दुर्वारः स्यात् । न च निरवकाशतया भसंज्ञा बाधिका स्यादिति वाच्यम् । नित्यवीप्सयोरित्येकवाक्यतापन्नपदसंज्ञाबाधनद्वारा प्रकृतिमात्रस्य प्राप्तद्वित्वाभावसंपादनेन सूत्रस्य चारितार्थ्यादसिद्धकाण्डैकवाक्यतापन्नपदसंज्ञाबाधने मानाभावात् । किं च यदा कार्यं तदासंज्ञेत्यस्यैव कार्यकालत्वेन दण्डिनेत्यत्र भसंज्ञाप्रयु-

डाराधिकारस्थभपदसंज्ञादिविषये तु यथोद्देशपक्ष एवेति तत्रत्यपरत्वेनैव बाध्यबाधकभावः। पदादिसंज्ञानां तत्र जातशक्तिग्रहेणैव त्रिपाद्यामपि व्यवहारः। अत एव पूर्वत्रासि

---

द्धकार्याभावेन भत्वाप्राप्त्या स्वादिष्विति पदत्वमादाय नलोपः, नद्यत्यन्नेकोसवर्णइतिप्रकृतिभावश्च स्यादिति भसंज्ञादिविषये यथोद्देशपक्षः स्वीकार्यः। अत्र भाष्यान्तरं प्रमाणयति। अत एवेति। यद्यपीदं भाष्यं सर्वसंज्ञाविषये यथोद्देशपक्षे प्रमाणभूतं तथाप्यन्यसंज्ञाविषये कार्यकालस्याप्युक्तत्वेनैतद्भाष्यमाकडारीयसंज्ञायामेव यथोद्देशपक्षत्वे पर्यवस्यति। अनस्तक्षणेत्यस्य वारणायाल्लोपोन इत्यत्र कार्यकालपक्षोपपादनं तु एकदेशिन इति न तद्विरोध इति शेखरे स्पष्टम्। यद्वा अत एवेत्यस्य पक्षद्वयेपि त्रिपाद्यां संज्ञाशास्त्रस्य प्रवृत्तौ बाधकाभावादित्यर्थः। तदेवाह। परिभाषाणामिति। आहुरिति। संज्ञापरिभाषाणां प्रत्येकं पक्षद्वयस्वीकारे न फलं किं तु आगच्छतमग्नी ३ इत्यादिफलानुरोधात् संज्ञाविषये यथोद्देशः पूर्वत्रासिद्धमितिसूत्रभाष्यात् परिभाषाविषये कार्यकालः। अयादिभ्यः परेतिभाष्यस्थपरशब्दोपवादत्वपर एव। अनुदात्तं पदमेकवर्जमित्यादिपरिभाषाणां त्रिपाद्यामप्रवृत्तिस्तु अन्तरङ्गपरिभाषावत्सर्वसंमतैव। न चामूषामित्यादौ षत्वं न स्यात् यथोद्देशपक्षे आदिरन्त्येनेत्येतद्दृष्ट्या अदसोसेरित्यादेरसिद्धत्वेनोकारादेरनिण्त्वात्, मम तु आदेशः प्रेत्येतदेकवाक्यतापन्नादिरन्त्येनेत्येतद्दृष्ट्या ऊत्वस्य सिद्धत्वेनेण्त्वात् षत्वं भवत्येवेति वाच्यम्। जातिपक्षे दोषाभावात्। अत्र पक्षे आदिरन्त्येनेतिशास्त्रं मध्यगवृत्तिजातिमतां संज्ञां करोति उत्वादिजातेश्च सिद्धासिद्धोकारवृत्तित्वेन सिद्धस्येवासिद्धोकारादेरिण्पदशक्यत्वबोधने बाधकाभावः। न चाइउण्सूत्रं स्वदृष्ट्या तस्यासिद्धत्वेनोत्वेन रूपेणापि कथमसिद्धमूकारं संगृह्णीयादिति वाच्यम्। चतुर्दशसूत्र्या अष्टाध्यायीबहिर्भूतत्वेन पूर्वत्रासिद्धमित्यनेनासिद्धत्वप्रतिपादनासंभवात्। अणादिसंज्ञायामइउणित्यादिसूत्राणां तत्तज्जातिपुरस्कारेण संग्रहरूपव्यापारस्यानुपयोगाच्च। ननु संज्ञाविषये यथोद्देशस्यैव स्वीकारे राजन् अस् पुरुष स् इत्यवस्थायां पूर्वं भसंज्ञायामल्लोपापत्तिः। न

द्धमिति सूत्रे परिभाषाणामेव त्रिपाद्यामप्रवृत्तिमाशङ्क्य कार्यकालपक्षाश्रयेण समाहितमित्याहुः ॥ यथोद्देशपक्षः प्रगृह्यसंज्ञाप्रकरणे भाष्ये॥२॥कार्यकालमित्यस्य च कार्येण काल्यते स्वसंनिधिं प्राप्यतइत्यर्थः। कार्येण स्वसंस्काराय स्ववृत्तिलिङ्गचिह्नितपरिभाषाणामाक्षेप इति यावत ॥ अत एव पूर्वत्रासिद्धमिति सूत्रे भाष्ये त्रिपाद्या असिद्धत्वात्तत्र सपादसप्ताध्यायीस्थपरिभाषाणामप्रवृत्तिमाशङ्क्य यद्यपीदं

---

चान्तरङ्गानपीतिन्यायेनाल्लोपो नेति वाच्यम् । यथोद्देशपक्षे अल्लोपोन इत्यत्र यचीत्यस्यानुपस्थित्या लुगुत्तरमपि भसंज्ञायाः सत्वेन लोपप्राप्तेर्लुकोन्तरङ्गनिमित्तविनाशकत्वाभावात् । संज्ञाविषये कार्यकालस्वीकारे तु अल्लोपोन इत्यत्र यचीत्युपस्थित्या लुगुत्तरं यजादिप्रत्ययपूर्वत्वाभावेन लोपाप्रसक्तेरिति चेन्न । कार्यकालपक्षेपि पदैकवाक्यतयान्वयस्य दूषितत्वेन यचीत्यनुपस्थितेः पक्षद्वयेपि दोषसाम्यात् यथोद्देशपक्षस्वीकर्तृमते दोषदानस्यायुक्तत्वात् । अन्तरङ्गानपीतिन्यायेन भसंज्ञायाः पूर्वमप्रवृत्त्या दोषाभावात् । न च संज्ञाविषयेन्तरङ्गानपीतिन्यायाप्रवृत्तिः । अत एव ञ्नित्स्वरे प्रत्ययलक्षणप्रतिषेध इति वार्तिकं संगच्छते । अन्यथात्रय इत्यादावित्संज्ञायाः प्रागेवोक्तन्यायेन लुकि स्वराप्राप्त्या वार्तिकासंगतिरिति वाच्यम् । इत्संज्ञायामुक्तन्यायाप्रवृत्तिस्वीकारेपि संज्ञामात्रेऽप्रवृत्तिस्वीकारे प्रमाणाभावात् ॥ इति यथोद्देशपक्षविचारः॥ कार्यस्य काल एव कालो देशो यस्य स कार्यकाल इत्यर्थे एकदेशस्थः सर्वं शास्त्रमभिज्वलयतीतिभाष्यविरोधोत आह। कार्येण काल्यतइति। कार्येण, तद्विधायकशास्त्रेण। परिभाषाणां, तद्विधेयानाम्। आक्षेपः, स्मरणम्। अत एवेति। परिभाषाविधेयार्थस्मरणादेवेत्यर्थः। तावताप्यसिद्धिरित्यस्य संस्कार्यदृष्ट्या संस्कारकस्य सिद्धत्वेपि संस्कारकदृष्ट्या संस्कार्यस्यासिद्धत्वेन संस्कारासंभव इत्यर्थः। ननु नागेशमते परिभाषादेशे येषां शास्त्राणां वाक्यार्थबोधो जातस्तेषु यथोद्देशपक्षो येषां न जातस्तेषु कार्यकाल इत्यस्य सत्वेन तावताप्यसिद्धिरितिशङ्कोत्थितिर्न संभवतीति चेत्, शृणु। यथोद्देशपरिभाषामात्रस्वीकारे अप्रवृत्तिशङ्-

तत्रासिद्धं तत्त्विह सिद्धमित्युक्त्वा तान्नताप्यासिद्धिरित्यभि-
प्रायके कथमिति प्रश्ने कार्यकालं संज्ञापरिभाषं यत्र का-
र्यं तत्रोपस्थितं द्रष्टव्यमित्युक्तम् ॥ न च कार्यकालपक्षे ङमो
ह्रस्वादित्यादौ तस्मादित्युत्तरस्य तस्मिन्निति निर्दिष्टे पूर्व-
स्येति परिभाषाद्वयोपस्थितौ परत्वादुभयनिर्देशे पञ्च-
मीनिर्देशो बलीयानिति तस्मिन्नितिसूत्रस्थभाष्यासंग-
तिः, उभयोरेकदेशस्थत्वेन परत्वादित्यस्यासंगत्यापत्तेः
स्पष्टं चेदमिको गुणेत्यत्र कैयटइति वाच्यम् ॥ विप्रतिषेध-

---

का, द्वितीयपरिभाषास्वीकारेण समाधानम् । यद्यपीति । अयं भावः ।
त्रैपादिकं विधिशास्त्रं स्वसंस्काराय परिभाषादेशे ऽसिद्धत्वान्न गच्छति । त-
थापि सापादिकपरिभाषाशास्त्रमिहागन्तुं शक्नोतीति सिद्धान्तिनोक्ते पूर्वप-
क्षी पुनराह । कथमिति । अयं भावः । पूर्वत्रासिद्धमित्यनेन परिभाषादृ-
ष्ट्या त्रैपादिकविधेरसिद्धत्वात्कथं त्रैपादिकविधिं संस्कुर्यादिति, तत्राह ।
कार्यकालमिति । अयमाशयः । यथा कश्चिन्मर्त्य इह लोके देवानपश्यन्नपि
भाग्यवशाद्देवैः स्वर्गं प्राप्यमाणः सर्वान् देवान् पश्यति हरिं गर्भस्थ इव
हेमाद्रिशर्मा मनुष्यो लङ्कां गतो रावणादिराक्षसानिव तद्देशमाहात्म्यात्
तथेहापि त्रिपाद्यामुपगतं परिभाषाशास्त्रं त्रैपादिकविधिं पश्यति देशमाहा-
त्म्यादेव । अन्यथा कार्यकालपक्ष उच्छिन्न एव स्यादिति । केचित्तु एत-
द्ग्रन्थस्वारस्यात्परिभाषाविषयेपि प्राचीनोक्तकार्यकालपक्ष एव नागेशसंमतः।
अत एव नागेशेन केचिदित्युक्तम् । अत एव चाग्रिमनचेतिशंकाग्रन्थोपि
संगच्छते । अन्यथा स्वदेशत्यागाभावस्य तत्तद्देशस्थत्वं वारयतीत्यादिनोक्त-
त्वेनैतद्ग्रन्थस्य निर्दलत्वापत्तिरित्याहुः । अन्ये तु नागेशमते सर्वपरिभा-
षाविषये कार्यकालपक्ष एव । सप्तमीनिर्देशादि क्वेत्यत्रातद्गुणसंविज्ञान-
बहुव्रीहिणा विप्रतिषेधे, असिद्धं बहिरङ्गं, सन्निपात, अनुदात्तं पदमेकेति
चतसृणां परिभाषाणां संग्रहः । कश्चिदेकदेशस्थ इति भाष्यं तु उक्तपरिभा-
षाचतुष्टयविषयमेव । अत एव कार्यकालपक्षे ङमोह्रस्वादितिशंकाग्रन्थः संग-
च्छतइति वदन्ति । न चेति । यद्यपि तद्देशस्थत्वं वारयतीत्युक्त्या नैतच्छ-

सूत्रेऽष्टाध्यायीपाठकृतपरत्वस्याश्रयणेनादोषात् । नहि कार्यकालपक्ष इत्येतावता तदपैति । पक्षद्वये ऽपि प्रदेशेषु स्वबुद्धिजननेनाविशेषात् । नहि तत्पक्षे ऽप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशगमनं संभवति। नाप्यस्मदादिबुद्धिजननेन स्वदेशत्यागो भवति । अत एव भाष्ये एकदेशस्थस्यैव सर्वशास्त्राभिज्वालकत्वमुक्तम् । अत एव तस्मि-

---

न्नोत्थितिस्तथापि प्राचीनमतानुसारेणैतद्ग्रन्थसत्वान्न दोषः । अत एवात्र स्पष्टं चेदमिंकोगुणइत्यत्र कैयटइत्युक्तम् । विधिवाक्येनैकवाक्यत्वाद्वा. स्वदेशं विहाय पथिकवद्देशान्तरगमनाद्वा, प्रदेशे ऽस्मदादि बुद्धिजननाद्वा, स्वदेशत्याग इत्याक्षेपाणां क्रमेण निरासमाह । नहीति । प्रदेशेषु, विधिवाक्यविषये । स्वबुद्धिजननेन, स्वविधेयार्थबोधनेन । अविशेषात्, विधिवाक्यैकवाक्यतायाः पक्षद्वयेपि सत्वादित्यर्थः । यद्वा प्रदेशेषु, परिभाषादेशेषु । स्वबुद्धिजननेन, सफलवाक्यार्थबोधेन, अविशेषात्, पक्षद्वयेपि परिभाषाणां पाठदेशस्यैव मुख्यदेशत्वेन तदनुरोधेन विप्रतिपेधशास्त्रप्रवृत्तेर्वक्तव्यतयात्र विशेषाभावादित्यर्थः । संज्ञाशास्त्राणां कार्यकालपक्षे तु विधिदेशे एव सफलवाक्यार्थबोधसत्वेन तद्देशस्यैव मुख्यदेशतया ऽयादिभ्य इति भाष्यसंगतिरिति तत्त्वम् । द्वितीयं निरस्यति । नहीति । तृतीयं निरस्यति । नापीति । न चायादिभ्य इति भाष्यासंगतिः । तत्रत्यसंज्ञापदस्य संज्ञाकार्यप्रकृतिभावोपलक्षकत्वात । परत्वादित्यस्यापवादत्वादित्यर्थकत्वाद्वा । प्राञ्चस्तु यत्र मुख्यदेशगतं परत्वमादाय व्यवस्था न संभवति तत्र गौणपरत्वमङ्गीक्रियते, सफलवाक्यार्थबोधाधिकरणदेशश्च मुख्यदेश इत्युक्तमेक । ङमइत्यत्र कार्यकालपक्षे द्वयोरेकदेशस्थत्वेन तदसंभवात् गौणं पाठदेशमादाय व्यवस्था । अयादिभ्य इत्यत्र तु मुख्यदेशमादाय व्यवस्थाऽसंभवान्नाष्टाध्यायीपाठकृतं गौणं तमादाय विप्रतिषेधइत्यस्य प्रवृत्तिः । अत एव पद्व्या मृद्व्या इत्यत्र लक्ष्यगतगौणपरत्वमादाय परत्वात्परयणादेशः परिवीरित्यत्र परत्वाद्दीर्घ इति च भाष्योक्तं संगच्छतइति प्राहुः ॥ इति कार्यकालपक्षविचारः ॥

न्निति सूत्रे कैयटः सूत्रपाठापेक्षया परत्वस्य व्यवस्थापकत्वमिति । इकोगुणेति सूत्रस्थकैयटस्तु चिन्त्य एव ॥ अन्यथा सर्वशास्त्राणां प्रयोगार्थत्वेन प्रयोगरूपैकदेशस्थत्वेन क्वापि परत्वं न स्यात् । किं च क्ङितिचेति सूत्रस्थकैयटरीत्या विधिसूत्राणां यथोद्देशपक्षे परिभाषादेशे संनिधाने-

---

वस्तुतो यथोद्देशकार्यकालपक्षयोर्निरुक्तबीजकत्वे विधिशास्त्रादावपि तत्संभवेन संज्ञापरिभाषामात्रविषयकत्वमशक्यं वक्तुम्। किं च यथोद्देशमित्यादेःपरिभाषात्वव्यवहारप्रयोजकविषयसंकोचकत्वादेरभावेन परिभाषात्वमप्यशक्यं वक्तुम् । अत एव वाक्यसंस्कारपदसंस्कारपक्षादीनां परिभाषात्वेन व्यवहारः शास्त्रकृच्छैर्लीपरिशीलितः क्व चिदपि नोपलभ्यते । भाष्ये तत्रतत्र यथोद्देशमित्याद्युल्लेखस्तु प्रकारद्वयस्यैव संभवाद्वस्तुस्वरूपपरिकीर्तनपरः । किं च प्रदर्शितमूलकैतत्पक्षद्वयोपन्यासस्य विशिष्य फलमप्यशक्यं वक्तुम् ।न तावत्तस्मिन्नितीत्यादेस्त्रिपाद्यां प्रवृत्तिः कार्यकालपक्षफलं, शास्त्रत्वसंपादकपरिभाषाणां त्रिपाद्यां प्रवृत्तेः पक्षद्वयेपि सूपपादत्वात् । तद्दृष्ट्या त्रिपाद्या असिद्धत्वं तु न । त्रैपादिकविधिशास्त्राणां शास्त्रत्वसंपादकगुणशास्त्रप्रवृत्तितः प्रागप्रामाण्यज्ञानानास्कन्दितबोधजनकत्वरूपशास्त्रत्वस्यैवासंभवाच्छास्त्रत्वमुपजीव्यासिद्धत्वबोधकेन पूर्वत्रासिद्धमित्यनेनासिद्धत्वबोधनस्याशक्यत्वात् । पूर्वत्रेत्यनेन च शास्त्रत्वेन रूपेणैवासिद्धत्वबोधनमावश्यकम्।अत एव रोरीत्यादावुत्वादिघटितनिर्देशसंगतिः।शास्त्रात्वावच्छिन्नोद्देश्यताकासिद्धंवहिरङ्गमन्तरङ्गे ऽनुदात्तमित्यादिपरिभाषाचतुष्टयं तु त्रिपाद्यां न प्रवर्तते । एतत्प्रवृत्तितः प्रागेव शास्त्रत्वस्य सिद्धतया पूर्वत्रासिद्धमित्यनेनासिद्धत्वबोधनस्य दुर्निवारत्वात् । एवं यथोद्देशपक्षस्यागच्छतमग्नी ३ इत्यपि न फलं, पक्षद्वयस्यैवाभावेन संज्ञासूत्रदृष्ट्यां प्लुतस्यासिद्धत्वेन प्रगृह्यसंज्ञायां नानुनासिकः । शास्त्रे परत्वपूर्वत्वे अष्टाध्यायीपाठकृते एव । एवं स्थिते योत्र बहुशः प्राचीननवीनमतविवेकपरिश्रमः पदैकवाक्यता वाक्यैकवाक्यतेत्यादिविचारः स सर्वोपि काकदन्तपरीक्षावदुपेक्षणीय एवेति दिक्।। ३ ॥

न तेषां परत्वं व्याहन्येत। एवं च वृक्षेभ्य इत्यत्र सुपि चे-त्यतः परत्वाद् बहुवचने झल्येदित्येत्त्वमित्याद्युच्छिद्येते-त्यलम्॥ ३॥

इत्संज्ञका अनुबन्धास्तेष्ववयवानवयवत्वसंदेहआह॥

## अनेकान्ता अनुबन्धा इति॥४॥

अनेकान्ता अनवयवा इत्यर्थः।यो ह्यवयवः स कदाचि-

---

यथोद्देशमित्यत्र संज्ञायाः प्रस्तुतत्वात्, इत्संज्ञोत्तरं प्रत्याहार इति भाष्येणेत्संज्ञायाः सर्वशास्त्रप्रवृत्तेः प्राग्भावित्वेन प्राधान्याद्वा तद्विषयिणीं परिभाषां वक्तुमुपक्रमते। इत्संज्ञका अनुबन्धा इति। इत्संज्ञोपलक्षणं, तेनेत्संज्ञायोग्यत्वमनुबन्धत्वमिति फलितम्। अवयवानवयवत्वसंदेहे इति। बोधकावयवानवयवत्वसंदेहे इत्यर्थः। एतेन सन्घटकनकारे सन्निरूपितावयवत्वमस्ति न वा, सनिरूपितावयवत्वमस्ति न वेत्युभयविधसंदेहस्य श्रोत्रेणैव निवर्त्यतया नानुमानापेक्षेत्यपास्तम्। सनो बोधकत्वं सशब्दस्य वेति बोधकत्वसंशयस्य तत्प्रयुक्तस्य सनो नकारे बोधकावयवानवयवत्वसंदेहस्य च श्रोत्रेणानिवर्त्यतयानुमानस्योपयोग इति भावः। संदेहे ऽन्यतरोपादानेनैव सिद्धे उभयोपादानं परिभाषाद्वयसाधारणमिदमवतरणमिति बोधयितुम्। अनवयवत्वसंदेहइत्युक्तौ तस्यानवयवत्वतदभावान्यतरकोटिकसंदेह इत्यर्थात् अनवयवत्वाभाववात् अनवयवत्वव्याप्यवान् वेति संदेहस्यापि अनवयवत्वसंदेहरूपत्वेन एकान्ता अनुबन्धा इत्यनुमितीयपक्षतात्वं न स्यात्। अवयवत्वसंदेहइत्युक्तौ तु अवयवत्ववान् अवयवत्वाभावव्याप्यवान् वेति संदेहस्यापि तद्रूपत्वेन अनेकान्ता इत्यनुमितीयपक्षतात्वं च न स्यात्। प्राचीनैः साध्यतदभावान्यतरस्मिन् पक्षसंबन्धावगाहिसंशयस्यैव पक्षतात्वोपगमात्। पर्वतो वह्निमानित्यनुमितौ पर्वतो वह्न्यभाववान् वह्निव्याप्यवान् वेति संदेहस्य पक्षतात्वाङ्गीकारात्। सनः, सन् इत्यत्र विभक्तिदर्शनं चिकीर्षतीत्यादिलक्ष्ये अदर्शनं च निरुक्तसंशयीय

तत्रोपलभ्यतएव, अयं तु न तथा, तदर्थभूते विधेये क-

कोटिद्वयोत्थापकं बोध्यम्। व्यतिरेकेण हेतुं निरूपयति। यो ह्यवयवः स कदा चित्तत्रोपलभ्यतएव अयं तु न तथेति। तत्रेति। बोधकइत्यर्थः। पक्षे हेतुरस्ति नवेति सन्देहनिवृत्त्यर्थं हेतोः साधकं हेत्वन्तरमाह। तदर्थभूत-इति। स्वविधेयइत्यर्थः। अनुबन्धाः बोधकानवयवाः बोधकावयवत्वेनोपल-ब्धिविषयत्वाभावात्। अनुबन्धाः बोधकावयवत्वेनोपलब्धिविषयत्वाभाव-वन्तः। तदर्थभूते विधेये कदाप्यदर्शनादित्यनुमानद्वयं हेतुवाक्यं पूर्वमप्रद-र्श्य व्याप्तिं प्रदर्शयतो ग्रन्थकारस्याभिमतमिति स्वरसतः प्रतीयते। के-चित्तु विधेये कदापीति हेतुमेव व्यतिरेकव्याप्त्या पक्षे संघटयति। यो हीति। तत्रेति। विधेयइत्यर्थ इति वदन्ति। अथैवं प्रकारद्वयेपि आद्गुण इति ग-कारे हेतु सत्वाद्व्यभिचारः। स्वरूपबोधकानवयवत्वसाधनेन निरुक्तगकारे व्यभिचारवारणे तु प्रकृतसंशयाविरोधित्वेनास्यानुमानस्याप्रयोजकत्वापत्ति-रिति चेन्न। स्वघटितघटकवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छि-न्नविधेयताप्रयोजकपदानवयवत्वस्य साध्यत्वेनादोषात्। यस्मिन्नवयवत्वं निरूपणीयं तत्स्वम्। निरुक्तगकारे हेतोः सत्वेपि तद्गुणपदस्यगुणपदाव-च्छिन्नविधेयताप्रयोजकत्वेन स्वघटितघटकवृत्तिश्रावणप्रत्यक्षविषयतावच्छेद-कधर्मावच्छिन्नविधेयताप्रयोजकत्वाभावेन तदनवयवत्वरूपसाध्यस्यापि सत्वेन न दोषः। साध्यदले विधेयता च साक्षादवच्छिन्ना बोध्या। तेन गुणपदस्य गुणपदत्वेन बोधकतया अदेङ्निष्ठविधेयतायाः परंपरया गुण-पदत्वावच्छिन्नत्वेपि न क्षतिः। न चैवमप्यकारे विधेये ककारस्याश्वत्थाम इति लक्ष्ये अभावेन कारप्रत्ययककारे हेतोः सत्वेन तद्घटितघटकावर्णवृत्ति-श्रावणप्रत्यक्षविषयतावच्छेदकात्वरूपधर्मेण साक्षादवच्छिन्नविधेयताप्रयो-जकाकाररूपपदावयवत्वस्यैव सत्त्वेन तदनवयवत्वरूपसाध्याभावे न व्यभि-चार इति वाच्यम्। साध्यदलीयवृत्त्यन्तपदस्य स्वघटितपदघटकयावद्वृ-त्तीत्यर्थकरणेन, स्वं ककारस्तद्घटितमकारइतिपदं तद्घटकयावद्वृत्तिश्राव-णप्रत्यक्षविषयतावच्छेदको धर्मश्चाकारशब्दत्वं तद्धर्मावच्छिन्नविधेयताया अप्रसिद्ध्या तत्प्रयोजकपदानवयवत्वस्यापि निरुक्तककारे सत्वेनादोषात्। नच यावदितिपदनिवेशे द्वयसज्दघ्नञ्मात्रच इतिसमस्तपदस्य चकाररूपा-

दाप्यदर्शनात् ॥ शित्किदित्यादौ समीपे ऽवयवत्वारोपेण

नुबन्धघटितपदघटकयावद्रूपतया तद्वृत्तिश्रावणप्रत्यक्षविषयतावच्छेदक-ताद्दशशब्दत्वरूपधर्मावच्छिन्नविधेयताया अप्रसिद्ध्या तत्प्रयोजकपदानव-यवत्वस्य केवलान्वयित्वेन तदनुमानस्य बोधकावयवत्वबुद्धिनिवर्तकत्वं न संभवतीति वाच्यम् । यावत्पदेन स्वघटितं यत्पदाघटितं पदं तद्घटकानु-बन्धेतरविभक्तीतरस्य यावतो ग्रहणेनादोषात् । तथा चानुबन्धघटितं पद-घटितं विभक्तिघटितं च समुदायमादाय तथाविधधर्मावच्छिन्नविधेयताप्र-सिद्ध्या न दोष उद्भावनीय इति बोध्यम् । ननु प्रत्युच्चारणं शब्दो भिद्यते न वा । आद्ये, सनः सकारे हेतोः सत्वेन व्यभिचारः । अन्त्ये, मनिनोऽनु-बन्धनकारे हेत्वभावाद्भागासिद्धिरिति चेन्न । स्वघटितं यत्पदाघटितं पदं तद्घटकप्रयोज्यविधयेतावच्छेदकधर्माभावादिति तदर्थेनादोषात् । विधेय-तावच्छेदकधर्मश्च विशेष्यविशेषणदलप्रविष्टयावत्पदार्थसंकुचितो ग्राह्यः । तथा च अकाराव्यवहितपूर्वत्वविशिष्टसकारत्वरूपस्य विधेयतावच्छेदकस-त्वस्य सकारे सत्वेन, विधेयतावच्छेदकमनत्वस्य मकारोत्तराकारोत्तरनत्व-रूपस्यानुबन्धे नकारे असत्वेन च न दोषः । न च कु- कि मुमि चानुबन्धयोर्विधेयतावच्छेदकधर्मसत्त्वाद्भागासिद्धिरिति वाच्यम् । कुक्मुमोः ककारमकारौ स्वघटितपदघटकबोधकानवयवौ स्वघटितपदघटकबोधकाव-यवोत्तरानवयवोत्तरत्वादित्यनुमानेन दोषवारणात् । स्वमनुबन्धस्तद्घटितं पदं कुक् मुम् इति तद्घटकबोधकावयवौ आद्यककारमकारौ तदुत्तरानवय-वौ उकारौ तदुत्तरत्वस्यानुबन्धे वर्तमानत्वात्समन्वयो बोध्यः । यद्वा स्व-घटितपदाघटितपदघटकप्रयोज्यविधेयतावच्छेदकधर्मवत्त्व, स्वघटितघट-कबोधकावयवोत्तरानवयवानुत्तरत्वरूपोभयसंबन्धावच्छिन्नप्रतियोगिताकस्वा-भावादित्येक एव हेतुरनवयवत्वसाधकः । सनादौ अन्त्य-संबन्धसत्वेऽपि आद्यसंबन्धाभावात् कुगादावाद्यसंबंधसत्वेऽप्यन्त्यसंब-न्धाभावादुभयसंबन्धावच्छिन्नप्रतियोगिताकाभावसत्वान्न क्वापि दोषः । ननूक्तानुमितेः पूर्वं सन्त्वस्य विधेयतावच्छेदकत्वे बाधकाभावेन तस्य नका-रेऽपि सत्वमिति चेन्न । विधेयवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्माभावा-दिति तदर्थेन सशब्दस्यैव विधेयतया तद्वृत्तिताद्दशधर्मस्य नकारे ऽभावेन

समासो बोध्यः । वुञ्छण्कठेत्यादौ णित्त्वप्रयुक्तं कार्यं पूर्वस्यैवेत्यादि तु व्याख्यानतो निर्णेयम् । हलन्त्यमित्यत्रा-

---

दोषाभावात् । समीपेऽवयवत्वारोपेणेति । ननु समीपेऽवयवत्वारोपे ऽत्र पक्षेऽपि औशादावनेकाल्त्वात्सर्वादेशाद्यापत्त्या नानुबन्धकृतमित्यादिपरिभाषात्रयकरणमावश्यकमिति चेन्न । माङ इतिनिर्देशादिज्ञापकेन इत्त्वघटितधर्मप्रयुक्ते कार्ये एवारोपकरणेनादोषात् । अत एवात्र पक्षे परिभाषात्रयानारम्भरूपं लाघवं भाष्योक्तं संगच्छते । नन्वेवं छणो णकारे कप्रत्ययावयवत्वापत्तौ कृ ञ्यकइत्यत्रादिवृद्ध्यापत्तिरत आह । पूर्वस्यैवेति । व्याख्यानत इति । दध्नचश्चकाराद्व्याख्यानात् स्वसमभिव्याहृतत्व स्वाघटितपदाघटकत्वोभयसंबन्धेन स्वविशिष्टे स्वनिरूपितमवयवत्वमारोप्यते । छणो णकारे आद्यसंबन्धसत्वेपि स्वं कशब्दस्तदघटितं पदं छणिति तदघटकत्वरूपद्वितीयसंबन्धाभावान्न कनिरूपितावयवत्वारोपः । अत्र घटकत्वं व्यपदेशिवद्भावातिदिष्टं ग्राह्यम् । तेन लोपशित्यत्र लोपइति पदाघटितं शितिपदं व्यपदेशिवद्भावेन तद्घटकत्वस्य शकारे सत्वेपि वस्तुतो ऽघटकत्वेन शे लोपनिरूपितावयवत्वासिद्धिः । आद्यसंबंधनिवेशात् अत्र शकारे त्यदादीनाम एतदकारनिरूपितावयवत्वाभावासिद्धिः । ङमुटि ङम् उट् इति पदद्वयमितिवादिमते टकारे ङम्निरूपितावयवत्वायात्र पदमनुबन्धेतरघटितं ग्राह्यं तेन ङमघटितं उट् इतिपदमनुबन्धेतरघटितं नास्तीति तदघटकत्वस्य टकारे सत्वात् ङमाष्टित्वासिद्धिः । ङमुडित्येकमेव पदमिति पक्षे त्वदोष एवेति बोध्यम् । ननु इत्वघटितधर्मातिदेशएव समीपे ऽवयवत्वारोपस्य ज्ञापितत्वेन उपदेशावयवत्वाभावादन्त्यत्वानुपपत्तिरत अह । अन्त्यशब्द इति । एतत्प्रवृत्तेः प्रागनुबन्धत्वाभावेन अनवयवत्वाभावान्न लक्षणोपयोग इति के चित् । अत्र पक्षे प्रमाणं वक्ष्यमाणपरिभाषात्रयज्ञापकानि उपदेशेजनुनासिक इति सूत्रे, उपदेशग्रहणं च, तत्फलं चाभ्र आँ अटित इत्यत्रादितश्चेतीट्प्रतिषेधो मा भूत् तस्य चानेकान्तपक्षे एव समीपेऽवयवत्वारोपेण संभव इति। स्पष्टं चेदं सिद्धमनुबन्धानामनेकान्तत्वादित्यादिना घुसंज्ञासूत्रवासरूपसूत्रादौ भाष्ये । एतत्फलं घ्वसोरेद्धावित्यत्र शे लोपनिरूपितावयवत्वारोपात्तस्य शि-

न्त्यशब्दः परसमीपबोधकः ॥ ४ ॥ वस्तुतस्तु—

## एकान्ताः ॥ ५ ॥

इत्येव न्याय्यम्। शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्च। अनवयवो हि काकादिरेकजातीयसम्बन्धेन गृहवृक्षादिषू-

---

त्वेन सर्वादेशत्वसिद्धिः। अत्र पक्षे गुप्तिजित्यादौ सनादिशब्दानां सो भवतीत्यर्थः। अनुवादे सनीत्यादौ तु इत्संज्ञकनकारपूर्ववर्तिबोध्ये सशब्दे इत्यादिरर्थः। अत्र पूर्वत्वादिनिवेशान्न णाणादौ दोषः। एवमुञिचपदइत्यत्र इत्संज्ञकञकारपूर्ववर्तिबोध्ये उशब्दे इत्यर्थस्तेन पदेर्कि तन्त्रयुतमित्यत्र न दोषः, अत्रोकारस्येत्संज्ञकञकारपूर्ववर्ति वेशब्दबोध्यत्वादिति दिक्॥ यद्यप्यत्र पक्षे नानुबन्धकृतमित्यादिवक्ष्यमाणपरिभाषात्रयं नारम्भणीयं तथाप्यारोपकवाक्यकरणं, अनुबन्धघटितात्सौत्रविभक्तिकल्पनं, आद्यन्तशब्दयोर्लक्षणास्वीकार इति गौरवम् आनङ्नकारादावुक्तहेतुसत्वेन साध्याभावाद्व्यभिचारः। विधेयेऽदर्शनरूपहेतोः सिद्धिस्तस्यलोप इत्येतद्वाक्यार्थबोधाधीना तदर्थबोधश्च हलन्त्यसूत्रवाक्यार्थबोधाधीनस्तद्वाक्यार्थबोधश्च पदार्थज्ञानविधया लक्षणाग्रहाधीनः तद्ग्रहश्चानवयवत्वग्रहपूर्वकशक्यार्थबाधग्रहपूर्वकः। अनवयवत्वग्रहश्च प्रकृतहेतुज्ञानपूर्वक इति चक्रकापत्तिश्चेत्यतः सिद्धान्तमाह। वस्तुतस्त्विति। एकान्ता इति। स्वघटितपदाघटितपदघटकबोधकावयवा इत्यर्थः। स्वघटितेत्यादिनिवेशात् छणो णकारे करूपबोधकावयवत्वं नेति बोध्यम्। तत्रेति। बोधकइत्यर्थः। तत्रोपलभ्यमानत्वमात्रस्य हेतुत्वे काकादीनामपि वृक्षादिषूपलभ्यमानत्वादन्यत्रानुपलम्भस्यैव हेतुत्वे शशशृङ्गादीनामपि तत्त्वाच्च हेतुसत्वेन साध्याभावाद्व्यभिचाराद्धेतुदले उभयोपादानम्। सनवयवनकारादेरपि सम्बन्धान्तरेणान्यत्रोपलम्भाद्धेत्वसिद्धिरत एकजातीयेति। येन संबन्धेन तत्रोपलभ्यमानत्वं तद्रूपावच्छिन्नसंसर्गेणान्यत्रानुपलभ्यमानत्वमिति तदर्थः। एवं च नकारस्य सनि समवायेनोपल-

लभ्यते नैवमयम् ॥ एवं हि बहुव्रीहिरपि न्यायत एवोपपन्नः ।

---

ध्धस्यान्यत्र तेन संबन्धेनानुपलभ्यमानत्वान्न दोषः । यद्यपि अवयवस्तत्रो-पलब्धेरितिभाष्यतस्तत्रोपलम्भादित्येव हेतुः प्रतीयते तथापि कैयटेन यो हि संशायको हेतुः स कथं निश्चायक इत्याशङ्क्य तत्रोपलम्भादित्यस्य त-त्रैवोपलम्भादित्यर्थकरणेन समाहितत्वात्तदनुसारेणायं ग्रन्थ इति ध्येयम् । न च बोधकत्वस्याद्यावधि अनिर्णीतत्वेन हेतोरसिद्धिरिति वाच्यम् । अ-नुबन्धघटिते सनादौ पक्षे विभक्तिप्रकृतित्वेन हेतुना बोधकत्वं प्रसाध्य त-द्घटकानुबन्धादौ तत्रैवोपलम्भादिति हेतुना बोधकावयवत्वसाधनेनादो-षात् । अत्रोपलब्धिविषयत्वाभावादित्यस्योपलब्धिविषयत्वयोग्यत्वाभावा-दित्यर्थः । तेनोत्पन्नविनष्टघटस्यान्यत्रोपलम्भाभावेपि तद्योग्यत्वसत्त्वान्न क्ष-तिः। न च घटरूपादौ घटावयवत्वापत्तिः । घटरूपादेर्घटादन्यत्रासत्वादिति वाच्यम् । इष्टापत्तेः । गुणक्रियादिसमुदायस्यैव सांख्यमतइव वैयाकरणमतेपि द्रव्यत्वाङ्गीकारात् । अत्र च सर्वाधारतानियामकसंबन्धेतरसंबन्धो ग्राह्यस्तेन कालादावेव कालिकादिसंबन्धेनोपलम्भेपि न कालावयवत्वं तेषामिति बोध्यम् । अत्र केचित् । अनुबन्धाः बोधकावयवाः बोधकायुतसिद्धत्वा-त् । यो यदयुतासिद्धः स तदवयवो यथा शाखादिः नकारानुबन्धस्य स-नयुतसिद्धत्वात् तदवयवत्वमक्षतम् । न चैवं बोधकानां स्वावयवायुतसिद्धत्वे-न तदवयवत्वापत्तिः।व्यापकत्वविशिष्टायुतसिद्धत्वस्य हेतुत्वेन समुदायस्य स्वा-वयवाव्यापकत्वेनादोषादिति वदन्ति । अत्र पक्षेगुप्तिजित्यादौ विधेयताप्रयोज-कसनादिपदस्य नकारेत्संज्ञकः सो भवतीत्यर्थः । इत्संज्ञालोपौ तु पक्षद्व-येपि सूत्रे एव, अनुबन्धविनिर्मुक्तपदार्थस्यैवोपस्थितेरनुवादे सनीत्यादौ न-कारेत्संज्ञके सशब्दे इत्यादिरर्थः । अन्ये तु अनुबन्धाः बोध्यावयवाः बोधके उपलभ्यमानत्वात् सनः सकारवदित्यनुमानेनानुबन्धानां बोध्या-वयवत्वंसिध्यति । न चेदमप्रयोजकं, स्वरूपशास्त्रस्यानुकूलतर्करूपस्य जागरूकत्वात् । इत्थं चानुबन्धसहितस्य बोध्यत्वेन वक्ष्यमाणपरि-भाषात्रयावतरणानि स्वरसतः संगच्छन्ते । अस्मिन् कल्पे तु बोध्य-एवेत्संज्ञालोपौ न सूत्रे, गुप्तिजित्यादिविधेये ऽनुवादे च सन्पदस्य सन्शब्द

अन्त्यादिशब्दे लक्षणा चन। किंचानवयवत्वे णशकप्रत्ययादौ

---

इत्येवार्थः । तेन णाणोर्न व्यभिचारः । तत्रोपलम्भादित्यादिहेतुना बोधकावयवत्वसाधनं तु न युक्तम् । बोधकत्वस्य सन्यव्याप्यसिद्धेः । अनुबन्धसहिताद्विभक्तिदर्शनेन सनादौ बोधकत्वनिश्चये तु नकारादौ तदवयवत्वस्य श्रवणेन्द्रियेणैव सिद्धतया सन्देहाभावेनानुमानस्यैवाप्रसक्तेः । अत एव भाष्ये तत्रोपलम्भादित्येव हेतुः प्रदर्शितो नान्यत्रानुपलम्भाच्चेति । एतेन यो हि संशायको हेतुः स कथं निश्चायक इत्याशङ्क्य तत्रोपलम्भादित्यस्य तत्रैवोपलम्भादित्यर्थ इति कैयटोक्तमपास्तम् । संशायकस्यैकस्य हेतोरसाधकत्वनिर्णये ऽपरहेतोर्निर्णयजनकत्वस्य सर्वसंमतत्वाच्च । अत एव स्थाणुर्वा पुरुषो वेति संशयस्थले पुरुषत्वसाधकस्य करचरणादिमत्वस्य प्रत्यक्षेण बाधे संशायकस्यैव कोटरादिमत्वस्य स्थाणुत्वानुमितिजनकत्वं सर्वसंमतम् । किं चानुवादे सन्यत इत्यादौ नकारेत्संज्ञकसशब्दे परत इत्याद्यर्थस्य कथंचित्संभवेपि विधेयताप्रयोजके गुप्तिजित्यादौ सनादिपदे न तत्संभवः । न विधौ परः शब्दार्थ इतिन्यायात् । किं चैवं दाप्शब्दस्यापि पकारेत्संज्ञकदाशब्दइत्यर्थे ऽवदातमित्यत्र तस्य सत्वेन वक्ष्यमाणावतरणासंगतिः।न च पकारेत्संज्ञकदाप्शब्दबोध्यत्वं दाप्पदशक्यतावच्छेदकमेवं सनादिपदेपि नकारेत्संज्ञकसन्पदबोध्यत्वं तत् । अत एव न णाणोर्व्यभिचारः । त्वद्रीत्या दाप्शब्दत्वस्य दाप्पदशक्यतावच्छेदकत्वे तु प्रणिदापयतीत्यत्रापि तत्सत्वाद् घुसंज्ञानिषेधापत्तिरिति वाच्यम् । पकारेत्संज्ञकेत्यादेस्तदर्थतावच्छेदकताया अनुपयोगेन लाघवान्मदुक्तस्यैव तस्योचितत्वात् । दैप्साहचर्यादिना पकारेत्संज्ञकस्य दापस्तत्र ग्रहणेपि तत्त्वस्य शक्यतावच्छेदकत्वकल्पने मानाभावात् । अत एव दाधाघ्वपिदितिन्यासेन सह न फलभेदः । किं च त्वन्मते सूत्रएवेत्संज्ञालोपयोः सत्वेन तत्र शित्परत्वयोग्यताया असंभवेनात्वाप्राप्त्या नानुबन्धकृतमनेजन्तत्वमिति परिभाषया तत्साधनपरभाष्यासंगतिः । शित्परत्वयोग्यस्यात्वविधानाद्देधे इत्यत्र नात्वम् । तद्योग्यता च प्रकृतेरेव न प्रत्ययान्तस्य न वौपदेशिकस्येति बोध्यम् । नन्वेवमिदम इश् अणत्वात्सवर्णग्रहणं प्राप्नोति अप्रत्यय इति निषेधादिति भाष्यासंगतिः बोध्यस्याणरूपत्वाभावात्, मम त्विकारस्य बोध्यत्वेन तस्याण्-

णादेरित्वानापत्तिः प्रत्ययादित्वाभावात् दघ्नचश्चकारस्य वैयर्थ्यापत्तिश्च । इदंच तस्यलोप इत्यत्र भाष्ये स्पष्टम् । तत्र ह्युक्तमेकान्ता अनुबन्धा इत्येव न्याय्यमिति दिक् ॥५॥

नन्वेकान्तत्वे ऽनेकाल्त्वादेव औशादीनां सर्वादेशत्वसिध्यानेकाल्सूत्रे शिद्ग्रहणं व्यर्थमत आह ॥

## नानुबन्धकृतमनेकाल्त्वम् ॥ ६ ॥

त्वादणुदित्सूत्रप्रवृत्तेर्निराबाधत्वान्नदोष इति चेन्न। अस्य भाष्यस्यानेकान्तपक्षाभिप्रायकत्वकल्पनेनादोषात् । एकान्तपक्षेपि ह्रस्वादीनामणत्वेन तद्बोधकह्रस्वादिपदेष्वणुदित्सूत्रप्रवृत्तौ अष्टादशादीनां ग्रहणापत्तिभिया ऽण्मात्रघटितं यदण्बोधकं पदं तेन स्वबोध्याण्सवर्णानां ग्रहणं भवति, मात्रपदेन चेत्संज्ञकेतरस्यैव व्यावृत्तिरत एवेणादिपदैः स्वबोध्यसवर्णग्रहणासिद्धिरेवं चेशादिपदस्याप्यणत्वेन प्राप्तसवर्णग्रहणस्य अप्रत्ययइतिनिषेधे बाधकाभावात् । उञि च पदइति सूत्रे उञ्पदस्य ञान्तबोध्य उशब्दे लक्षणा बोध्या तेन पदे किं, तन्त्रयुतमितिभाष्यं संगच्छते । इत्थं चार्धजरतीयस्यानौचित्यादेकान्तपक्षे ऽनुबन्धा बोधकबोध्ययोरुभयोरप्येकान्ता इति सिद्धान्तयन्ति॥५॥

शिद्ग्रहणं व्यर्थमिति । ननु घ्वसोरेद्धावितिविहितलोपस्य सर्वादेशत्वार्थं शिद्ग्रहणं चरितार्थमिति चेन्न । लोपोयील्यतो लोपपदानुवृत्त्यैव सिद्धे सूत्रे लोपपदोपादानादेव सर्वादेशत्वसिद्धेः शिद्ग्रहणवैयर्थ्यस्य सूपपादत्वात् । तत्सूत्रस्थभाष्यं तु अनेकान्तपक्षाभिप्रायकमिति न तद्विरोधः । नन्वनेकाल्सूत्रे बोधकवृत्त्यनेकाल्त्वस्य सर्वादेशताप्रयोजकत्वे पादस्यलोप इत्यत्रापि सर्वादेशत्वापत्तिरतो बोध्यवृत्त्यनेकाल्त्वस्य तत्त्वं वाच्यं तथा चानुबन्धविनिर्मुक्तपदार्थोपस्थितेः सत्वात् बोध्यस्यौशब्दस्यानेकाल्त्वाभावात्सर्वादेशार्थं शित्वस्य चारितार्थ्यमिति चेन्न । शकारस्य तस्य लोप इति लोपादेशे आनुमानिकस्थान्यादेशभावेन स्थानिवत्सूत्रेणैवानेकाल्त्वातिदेशात्सर्वादेशत्वसिद्धेः शित्ववैयर्थ्यस्य सूपपादत्वात् । न चानल्विधाविति तन्निषेधः । नल्यपीतिसूत्रारम्भसामर्थ्येनानुबन्धघटिततथाविध-

शिद्ग्रहणमेवैतज्ज्ञापकम्, तेनार्वणस्तृ इत्यादेर्न सर्वा-

र्मानयने ऽनल्विधावित्यस्याप्रवृत्तिज्ञापनात्। न च हल्ङ्यादिसूत्रे ङ्याब्ग्रहणवैयर्थ्यापत्तिर्ङ्याबादिरूपबोधकगतहलन्तत्वस्य स्थानिवद्भावेनैव लाभादिति वाच्यम्। आकाररूपाबन्तादेवेति नियमार्थं तदावश्यकत्वात्। रमेत्यादावाकारे हलन्तत्वातिदेशेपि रमेत्यस्य हलन्ततदादित्वाभावेन तत्र सुलोपार्थं तदावश्यकत्वाच्च। शिद्ग्रहणमेवैतादिति। शिद्ग्रहणमपीत्यर्थः। तथा च नल्यपीतिसूत्रसहकृतेनैतच्छिद्ग्रहणेनानुबन्धत्वव्याप्याल्मात्रवृत्तिधर्मघटितधर्मातिदेशे ऽनल्विधाविति निषेधो न प्रवर्ततइति विशेषरूपेण ज्ञापनादुभयोश्चारितार्थ्यम्। परिभाषार्थस्तु अनुबन्धकृतमनेकाल्त्वं यथा न भवेत्तथा कल्पनीयमिति। तथा च अशब्दादाचारक्विबन्ताद् घञि अतोलोपे अ इत्यत्र घञ्वृत्तिहलन्तत्वातिदेशेन हल्ङ्याबिति सुलोपो न। एतेन रुङ् तृङ् इति ङिदादेशविधानात्सर्वादेशाप्राप्त्या फलाभावेन परिभाषा शिद्ग्रहणं च व्यर्थं एवेत्यपास्तमिति ग्रन्थाशय इति केचित्। यत्तु अनेकाल्वृत्तिधर्मावच्छिन्नविधेयताश्रयः सर्वस्येत्यनेकाल्सूत्रार्थाद्बोध्यौशब्दस्यानेकाल्त्वाभावेपि तत्त्वान्न क्षतिः। लोपस्तु न सर्वादेशस्तत्र विधेयतावच्छेदकस्याभावत्वस्यानेकाल्वृत्तित्वाभावात्। अनेकाल्वृत्तीत्यस्याल्समुदायवृत्तीत्यर्थस्तेन ह्रस्वत्वादेरनेकेष्वल्पु विद्यमानत्वेपि न क्षतिरिति। तन्न। पथिमथीत्याकारादेशस्य दिव औदित्यौकारादेशस्य च तथात्वाभावेन सूत्राप्राप्त्या नानुबन्धकृतमितिपरिभाषया सर्वादेशवारणपरभाष्यासंगतेः। एतेनानुपूर्वीप्रकारेण बोधकं यदनेकाल्पदं तद्बोध्यः सर्वस्यादेश इति सूत्रार्थाल्लोपस्यानुपूर्वीप्रकारेण बोधकत्वाभावादौशादेस्तथात्वाच्च न दोष इति परास्तम्। पूर्वोक्तयुक्त्या बोध्यस्यानेकाल्त्वे तु न काप्यनुपपत्तिरिति ध्येयम्। न चाल्घटितस्य बोधको योनेकाल् तद्बोध्यः सर्वस्य भवतीत्यनेकाल्सूत्रार्थेन लोपपदस्याल्घटितबोधकत्वाभावेन न सर्वादेशताप्रयोजकत्वं, विसर्जनीयादिपदानामल्घटितबोधकत्वेपि निर्दिश्यमानपरिभाषयैव तत्रतत्र वारणसंभवादिति वाच्यम्। अत्रानुनासिकः पूर्वस्य तु वोदस्थास्तम्भोरित्येतद्विषये सर्वादेशापत्तेर्दुर्वारत्वात्। न च ज्ञापितेपि स्वांशे चारितार्थ्यं दुरुपपादमौशादौ शकारोच्चार-

देशत्वम् । डादिविषये तु सर्वादेशत्वं विनानुबन्धत्वस्यैवाभावेनानुपूर्व्यातिसिद्धम् ॥ ६ ॥

नन्वेवमप्यवदातं मुखमित्यत्र पलोपोत्तरमात्त्वे कृतेऽदाप् इति घुसंज्ञाप्रतिषेधो न स्याद्दैपः पकारसत्त्वे ऽनेज-

---

णसामर्थ्याद् भूतपूर्वानेकाल्त्वमादायापि सर्वादेशासिद्धेरिति वाच्यम् । जसः शी, जश्शसोः शिरित्यादेः शित्वस्य विभाषाङिश्योः शिसर्वनामस्थानमित्यत्र विशेषणार्थतया चारितार्थ्येन शकारोच्चारणवैयर्थ्याभावेन भूतपूर्वगत्याश्रयणे मानाभावात्स्वांशे चारितार्थ्यस्य सौष्ठवात् । डादिविषये त्विति । डादिविषये सर्वादेशात्प्राक् प्रत्ययत्वाभावेन इत्त्वाप्राप्त्या न परिभाषाप्रवृत्त्यवसर इति भावः । न चैतद्ग्रन्थकृन्मते इत्संज्ञायोग्यत्वरूपस्यानुबन्धत्वस्य सत्त्वात्परिभाषाप्रवृत्तेः सुलभतयैतद्ग्रन्थासंगतिः जसः शीतिपूर्वग्रन्थविरोधश्चेति वाच्यम् । अनुबन्धत्वस्याभावेन विनापि, अनुबन्धत्वसत्वेपि डादिविषये सर्वादेशत्वमानुपूर्व्यात्, डा आ इत्यादिप्रश्लेषात् सिद्धमिति योजनया ग्रन्थसंगतेरिति केचित् । वस्तुतस्तु परिभाषाप्रवृत्तावनुबन्धत्वस्योपजीव्यतया डादिविषये परिभाषाप्रवृत्तिस्वीकारे ऽनेकाल्त्वस्याप्रवृत्त्या डादीनामन्त्यादेशत्वे डकारादेरित्संज्ञाया अप्रवृत्या स्वोपजीव्यानुबन्धत्वविघातस्य स्पष्टतया संनिपातपरिभाषया निरुक्तपरिभाषाया अप्रवृत्तेरुक्तग्रन्थस्य यथाश्रुतार्थकरणेपि न क्षतिः । जसः शीत्यत्र त्वेतत्परिभाषाप्रवृत्तावपि शित्वात्सर्वादेशस्य सत्वेन स्वोपजीव्यानुबन्धत्वस्य विघाताभावेन संनिपातपरिभाषाया विषयाभावान्न पूर्वापरस्वग्रन्थविरोधोपीति बोध्यम् ॥ ६ ॥

पलोपोत्तरमात्वइति । न च पलोपोत्तरमुपदिश्यमानत्वाभावः । स्थानिवद्भावेन तल्लाभात । न चैवमटधातौ अस्येत्संज्ञोत्तरं टस्येत्त्वापत्तिरिति वाच्यम् । इत्संज्ञाविधावनतिदिष्टोपदिश्यमानत्वस्यैव प्रयोजकत्वात् । अत एव मकारपरित्राणार्थः स्थमोरुकारश्चरितार्थः । आत्वविधावतिदिष्टोपदिश्यमानत्वस्यापि प्रयोजकत्वे दोदद्घोरिति सूत्रे दाग्रहणमेव मानम् । अन्यथा धारूपघोर्दधातेर्हिरित्यनेनैव बाधाद्धेटष्टृकारस्य लोपोत्तरमात्वाप्राप्त्या घुत्वाभावादेव तदप्राप्तेर्दारूपस्यैव तत्संभवेन तद्ग्रहणं व्यर्थमेव स्यात् । न

इषशब्दादाचारक्विपि लटि शतृप्रत्यये शपा सह पररूपे इषदित्यत्र छत्वे प्रत्ययलक्षणेन क्विप्परकत्वात् शत्वे इशदित्यत्र स्वोत्तरनिमित्तकस्यापि छस्य सत्वेनोक्तसाहचर्यस्य वक्तुमशक्यत्वात्। न च शपा सह पररूपस्य स्थानिवद्भावाच्छत्वाप्राप्तिरिति वाच्यम्। नपदान्तसूत्रेण निषेधेन स्थानिवद्भावाप्राप्तेः। नौशब्देन अशब्दस्य समासे नाव इति जाते तत आचारक्विवन्ताण्णावल्लोपे नावयतीत्यत्रान्तर्वर्ति क्विपमादाय प्राप्तस्योठो वारणाय जातबहिरङ्गत्वस्यासिद्धत्वप्रयोजकत्वमावश्यकम्। न चोठि कर्तव्येऽल्लोपस्य स्थानिवत्वमिति वाच्यम्। नपदान्तेति क्वौ विधिंप्रतीतिवा तन्निषेधात्। दीङो घञर्थे के दीयशब्दादाचारक्विबन्ताण्णावल्लोपे दियतीत्यत्र क्विपो वकारमादाय प्राप्तयलोपाभावाय चोक्तपरिभाषाऽऽवश्यकी। एवमिच्छच्छब्देन अशब्दस्य समासे इच्छद इति जाते तत आचारक्विबन्तात्क्विप्यल्लोपे ततो णिचि टिलोपे इच्छयतीत्यत्र शत्ववारणमप्येतस्याः फलं बोध्यमित्यन्यत्र विस्तरः। तत्कालप्राप्तिकमिति। अत एवेच्छतीत्यत्र गुणात्पूर्वं तुकि लघूपधत्वाभावान्न गुणः। अभवकदित्यत्र नित्यमकचं बाधित्वान्तरंगत्वादितश्चोति लोपः। अन्यथा ऽकचि कृते इकारलोपे अभवतक् इति स्यादिति दिक्। के चित्तु रियति, असुस्रुवदित्यादौ लघूपधगुणादन्तरंगत्वादियङादिसिद्धिः। अयजे इन्द्रमित्यादौ सवर्णदीर्घं बाधित्वान्तरंगत्वादाद्गुणः। ग्रामणिनी कुले इत्यत्र नुमं बाधित्वान्तरंगत्वाद् ह्रस्वः। रुयादित्यादौ प्रकृतिप्रत्ययापेक्षाडिड्भ्यां प्रागन्तरंगत्वाद्यासुट्। कश्च अश्च ईशश्चेति द्वन्द्वे नित्यमपि गुणं बाधित्वान्तरंगत्वात्सवर्णदीर्घे केशा इति रूपसिद्धिरन्यथा कैशा इति स्यादिति समकालप्राप्तिकबहिरंगासिद्धत्वस्योदाहरणान्याहुः। तन्न। रियत्यसुस्रुवदित्यादौ सत्यपि गुणे तस्य जातबहिरंगत्वेनासिद्धतयेकारादिबुद्ध्येयङादिसिद्धेर्निष्प्रत्यूहत्वात्। यत्तु येन नाव्यवधानमितिन्यायेन पुगन्तसाहचर्येण च हलन्तलघूपधे एव गुणप्रवृत्तिस्वीकारान्नैतत्समकालप्राप्तिकबहिरंगासिद्धत्वफलमिति। तन्न। भीधातोर्घञर्थे के तदन्तादाचारक्विबन्तात्कर्तरिक्विप्यल्लोपयलोपयोः पुनराचारक्विबन्ताल्लटि शपि भयतीत्यत्र गुणानापत्तेः। अल्लोपस्य स्थानिवद्भावेनाकारव्यवधानात्। मम तु स्थानिवत्वेन भिअ इत्येवंरूपतया लघूपधत्वेन तत्प्रवृत्तेः सुलभत्वात्। एकमात्रिकवर्ण-

व्यवधाने गुणप्रवृत्तिस्वीकारे त्वेतद्भाष्यमेव मानं बोध्यम् । अयज इ इन्द्रमित्यादौ तु परमपि दीर्घं बाधित्वा नित्यत्वाद् गुणः । एवं रुयादित्यत्रापि नित्यत्वादेव यासुट्प्रवृत्तिर्बोध्या । केशा इत्यत्र गुणस्य नित्यत्वेप्यपवादत्वात्सवर्णदीर्घउक्तरूपासिद्धेर्नैतानि समकालिकबहिरङ्गासिद्धत्वोदाहरणानीति दिक् । पट्व्यामृद्व्येति भाष्योक्तोदाहरणमपि न चारु । पूर्वं परयणादेशेपि तस्य स्थानिवद्भावात्पूर्वयणादेशेनेष्टसिद्धेः । केचित्तु इ उ आ इत्येतेषां समासेत्र पूर्वं परयणादेशे पूर्वस्येकारस्य यणादेशानापत्तिः । स्थानिवद्भावेन तु न निर्वाहः । नपदान्तेति निषेधात् । ननु परयणादेशस्य जातबहिरङ्गासिद्धत्वेन पूर्वयणादेशेप्युक्तरूपसिद्धिः । न च नाजानन्तर्यइति निषेधः । यत्रान्तरङ्गशास्त्रप्राप्त्युत्तरकालमेव बहिरङ्गप्राप्तिस्तत्रैव तन्निषेधप्रवृत्तेः । अत्र तु द्वयोरपि यणोः समकालेपि प्राप्तिसत्वेन नाजानन्तर्यइत्यस्य विषयाभावात् । अत एवोमाङोश्चेत्याङ्ग्रहणं चरितार्थमिति चेन्न । परयणुत्तरं पूर्वस्य यण्यपि तस्य वलिलोपेन निवृत्तेर्दुर्वारत्वात् । अचः परस्मिन्निति स्थानिवत्त्वेन तु न निस्तारः, पूर्वयणः स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावात् । निरुक्तान्तरङ्गपरिभाषास्वीकारे तु पूर्वयणुत्तरं परयण्प्रवृत्त्या पूर्वयणः स्थानिभूतादचः पूर्वत्वेन दृष्टत्वात्स्थानिवद्भावेन वल्परत्वाभावान्न वलोपः । तथा च य्वाइति रूपसिद्धिरेतदन्तरङ्गपरिभाषाफलं बोध्यम् । न च जातबहिरङ्गासिद्धत्वेन परयणो ऽसिद्धत्वाद्वल्परत्वाभावेन वलिलोपो नेति वाच्यम् । अज्निष्ठान्यानन्तर्यनिमित्तकपूर्वयण्रूपान्तरङ्गकार्यप्रवृत्त्युत्तरप्रवर्तमानपूर्वयलोपकार्यस्य सत्वेन द्वितीयार्थकनाजानन्तर्य इति निषेधेन जातबहिरङ्गासिद्धत्वायोगात् । अत एवाक्षद्यूरित्यत्र वलिलोपो नेति प्राहुः । अन्ये त्वबिभयामित्यत्र भी अम् इत्यवस्थायां परमपि गुणं बाधित्वा श्लुनिमित्तकद्वित्वस्यान्तरङ्गत्वात्पूर्वं प्रवृत्त्याभ्यासे इकारश्रवणसिद्धिः । एवं जन् अतीत्यवस्थायां परमप्युपधालोपं बाधित्वान्तरङ्गत्वात् श्लाविति द्वित्वे जज्ञतीति रूपसिद्धिः । अन्यथा परत्वात्पूर्वमुपधालोपे धात्ववयवैकाच्त्वाभावेन द्वित्वानापत्त्योक्तरूपासिद्धिः स्यादिति तत्फलमाहुः । नन्वेवं वृश्चतीत्यादौ वलोपे कर्तव्ये संप्रसारणस्य तत्कालप्राप्तत्वाभावेन जातत्वाभावेन चोक्तपरिभाषाऽप्राप्त्यानया नलोपवारणपरभाष्यासंगतिरत

मसिद्धमित्यर्थः । व्रश्चादिषु पदसंस्कारपक्षे समानकालत्वमेव द्वयोरिति बोध्यम् ॥ एतेनान्तरंगं बहिरंगाद् बलीय इति परिभाषान्तरमित्यपास्तम् । एनामाश्रित्य विप्रतिषेधसूत्रे भाष्ये तस्याः प्रत्याख्यानाच्च ॥ अन्तरंगशास्त्रत्वमस्या लिंगम् ॥

इयं च त्रिपाद्यां न प्रवर्तते त्रिपाद्या असिद्धत्वात् ।

---

आह । पदसंस्कारपक्षइति । तथा चैतत्पक्षाभिप्रायकं भाष्यमिति न तद्विरोध इति भावः। आदिना पद्व्या मृद्व्येत्यस्य संग्रहः । एतेनेति । एतत्परिभाषयैव जातसमकालप्राप्तिकबहिरंगयोरसिद्धत्वबोधनाद् वृश्चत्यादौ वारणेनेत्यर्थः । आद्यांशे ऊठ्ग्रहणं द्वितीयांशे चाङ्ग्रहणं मानं परिभाषात्वंशद्वयवत्येकैव न तु समकालप्राप्तिकबहिरङ्गस्यासिद्धत्वबोधक 'मन्तरंगं बहिरंगाद् बलीय' इति परिभाषान्तरमिति भावः। अन्तरंगशास्त्रत्वमस्या लिंगामिति । तथा चान्तरंगशास्त्रत्वेन रूपेण त्रैपादिकान्तरंगस्य पूर्वत्रासिद्धमित्यनेनैतत्परिभाषादृष्ट्या ऽसिद्धत्वबोधनादनया बहिरंगस्य त्रैपादिकान्तरंगशास्त्रदृष्ट्या नासिद्धत्वम् । अन्तरंगत्वस्यैतदुद्देश्यतावच्छेदकत्वे तु पूर्वत्रासिद्धमित्यनेन शास्त्रत्वेन रूपेणासिद्धत्वप्रतिपादनेप्यन्तरंगत्वेनासिद्धत्वाभावेनैतत्परिभाषायास्त्रिपाद्यां प्रवृत्तेर्दुर्वारत्वापत्तिः । अत एव रोरीत्यस्य शास्त्रस्य रेफलोपविधायकत्वेन रूपेण पूर्वत्रेत्यनेनासिद्धत्वबोधनेपि तत्तच्छब्दत्वादिना ऽसिद्धत्वाभावाद्धशिचेत्यादिशास्त्रप्रवृत्तिरितिभावः। बहिरङ्गशास्त्रत्वं तु नास्या लिंगमित्यतोरोरिति सूत्रे शब्देन्दुशेखरे स्पष्टम् । यत्तु प्राञ्चः ।। अन्तरंगत्वमेवास्या लिंगं त्रिपाद्यामेतत्प्रवृत्तिरिष्टैव । अत एव भाष्ये नार्कुटः कार्तिः सुध्युपास्यः नार्मत इत्यादौ बहिरंगपरिभाषयैव समाहितमेवं च 'विसर्जनीयो ऽनुत्तरपदे' 'निष्ठानत्वमवृद्धेः' 'यणः प्रतिषेधः' 'नृमतौ वत्वप्रतिषेध' इति वार्तिकचतुष्टयं नारम्भणीयामिति महालाघवम् । एवं तस्यदोष इति वार्तिकमपि व्यर्थमेव, चक्रयत्र निगाल्यते माषवपनीत्यादौ संयोगादिलोपादीनां बहिरंगपरिभाषायापि वारणसंभवात् । अत एव दौष्कुलिरित्यत्र बहिरं-

गत्वेन वृद्धेरसिद्धतयोदुपधत्वेन षत्वासिद्धिरिति । तन्न । तथासत्यभिषे- णयत्यभिषिणोतीत्यत्र षत्वस्य बहिरंगतया ऽसिद्धत्वे णत्वानापत्तेः । सर्वे- षामित्यादौ प्रकृतिप्रत्ययसापेक्षत्वेन सुटो बहिरंगासिद्धत्वेन षत्वानापत्तेः राज्ञ इत्यत्राल्लोपस्यासिद्धत्वेन श्चुत्वानापत्तेश्च । न च प्रत्य- यावयवस्य कार्ये बहिरंगपरिभाषा ऽनित्या, अत एव करिष्यतीत्यत्र स्य- विकरणस्यानया ऽसिद्धत्वाभावेनेट्सिद्धिरिति वाच्यम् । कार्तिनेमित इ- त्यादावपि प्रत्ययावयवकार्यत्वेनैतदप्रवृत्त्यापत्त्या वार्तिकारम्भस्य तत्र म- ते प्यावश्यकत्वेन लाघवस्य दुर्वचत्वात् । अनुदात्तादशब्दादाचारक्विब- न्तात्तृच्येकाच उपदेशइतीडभावे ऽतोलोपे निष्पन्नतृशब्दस्य पुत्रश- ब्देन समासे तत इञि तार्पुत्रिरित्यत्र प्रत्ययावयवकार्यत्वेनो- क्तपरिभाषाया अप्रवृत्या विसर्जनीयइतिवार्तिकस्याप्यावश्यकत्वात् । एवं शतंदाय्यत्रेत्यत्राप्युक्तरीत्या वार्तिकावश्यकत्वं बोध्यम् । यद्वा कर्तरिच- र्षीत्यादिनिर्देशैः स्वाघटितपदाघटकत्वसंबंधेन खर्विशिष्टो यः ऋकारस्थानि- करेफस्तद्भिन्नस्य खरि परे विसर्ग इत्येव ज्ञाप्यते तथा च नार्कुट इत्यत्र खरघटितपदाघटकोण् प्रत्ययस्तन्निमित्तकः ऋकारस्थानिकश्चात्र रेफ इति न विसर्गः । एवं प्राछेतीत्यत्रापि न विसर्गप्राप्तिरिति मम मतेपि विसर्जनीय- इति वार्तिकमवक्तव्यमेव । संयोगान्तसूत्रे झल इत्यस्य संबन्धाद्यणः प्रतिषेध इति वार्तिकं व्यर्थमेव त्वन्मतइव मन्मतेपि । बहिरंगपरिभाषा- यास्त्रिपाद्यां प्रवृत्तिस्वीकारेपि तक्षिधातोर्ण्यन्तात्क्विपि तगित्यादौ संयो- गादिलोपस्य प्लायतइत्यादौ लत्वस्य प्राह्णिोदित्यादौ णत्वस्य चान्तरंगा- त्वाभावेनानया वारणासंभवात्तस्यदोष इति वार्तिकस्याप्यावश्यकत्वम् । एवमृतशब्दादाचारक्विबन्ताल्लङ्यार्तदित्यत्र नत्ववारणाय निष्ठानत्वमिति वार्तिकमप्यावश्यकमेव । समर्थग्रहणेन कृतसन्धेरेव तद्धितस्योत्पत्त्या दौष्कु- लिरित्यादाविदुदुपधस्येतिषत्वरूपसन्धिकार्योत्तरं तद्धितोत्पत्तेर्न निरुक्तदो- षावकाशः । किं चान्तरंगपरिभाषायास्त्रिपाद्यामप्रवृत्तिस्वीकारादेव तद्वानि- त्यत्र वत्वस्य बहिरंगत्वेपि यरोऽनुनासिकइत्यनुनासिको न । कदश्व इत्यत्र कदादेशस्य बहिरंगत्वेपि जश्त्वसिद्धिः । नद्धामित्यत्र झलादिप्रत्ययनिमित्तक- नहोध इति धत्वस्य बहिरंगत्वेपि झलांजशझशीति जश्त्वसिद्धिरक्राष्टामित्यत्र झलो झलीति सलोपस्य बहिरंगत्वेनासिद्धत्वे षढोः कः सीतिकत्वापत्तिरित्या-

अस्याश्च वाह ऊठ्सूत्रस्थमूड्ग्रहणं ज्ञापकमित्येषा सपादसप्ताध्यायीस्था। अन्यथा संप्रसारणमात्रविधानेन लघूपधगुणे वृद्धिरेचीति वृद्धौ विश्वौह इत्यादि सिद्धेस्तद्वैयर्थ्यादिफलान्यूह्यानि । लक्ष्यानुसारेण तत्रतत्र यथोद्देशपक्षस्वीकारस्तु लक्षणैकचक्षुष्काणामस्माकमनुचित इति सुधीभिराकलनीयम् । तद्वैयर्थ्यमिति । न चोडिदामिति स्वरार्थमूठ्ग्रहणमावश्यकमिति वाच्यम् । ठितो वाहः संप्रसारणमित्यर्थक वाह ठ इति न्यासेन सिद्धेष्ठकारोच्चारणसामर्थ्येन क्यजादिविधौ चित्रङो ङकारोच्चारणसामर्थ्यात् क्यज्विशिष्टचित्रशब्दस्य ङित्वबोधनवदस्यापि संप्रसारणविशिष्टस्य ठित्वाट्ठिदिदमितिन्यासेन स्वरसिद्धेरूड्ग्रहणवैयर्थ्यस्य सूपपादत्वात् । अत्र न्यासे पदलाघवाभावेप्यनेकमात्रालाघवस्य सत्वात् । के चित्तु वाह इत्यत्र ऱ्हस्व उद् विधेयः स्वरविधौ च ठिदिदमित्येव वक्तव्यं तथा च सार्धमात्राधिक्येन यथाश्रुतगुरुन्यासस्योक्तपरिभाषाज्ञापकत्वम् । न च पदत्रयकरणेनोक्तन्यासे गौरवादुक्तपरिभाषाकल्पनासंभव इति वाच्यम् । मात्रालाघवस्य सर्वतो वलवत्वात् । अत एव भाष्यकृतानेकयोगकरणेनेनातोरिकाराकारौ प्रत्याख्याताावित्याहुः । न चैवमक्षद्युवेत्यत्रोक्तस्वरापत्तिरूठोभावेनोद्युपधेति वार्तिकस्येदानीमसत्वादिति वाच्यम् । ठित्सबंधिनो ऽनन्त्यवस्थानिकोकारवत इति वार्तिककरणेन तद्वारणात् । सिद्धान्ते यथाश्रुतवार्तिकस्याक्षद्युवेत्यत्रोक्तस्वरापत्तिवारणायार्थान्तरकरणस्यावश्यकत्वमेव । केचित्तूडिदमित्यत्र वाविदामिति न्यस्यात्र वाऊइदामिति च्छित्वा वकारं च प्रश्लिष्य वस्थानिकादूकाराद्वस्थानिकादुकाराच्चोपधाभूतात्परस्येत्येवं तत्सूत्रार्थकरणेन विश्वौह इत्यादौ निरुक्तस्वरासिद्धेर्ज्ञापकं पूर्वोक्तं सम्यगेव । अत्र वस्थानिकत्वमूकारस्य साक्षादेव बोध्यम् । तेन यून इत्यत्र न दोष इति वदन्ति । अन्ये तूडिदामित्यत्रोकारः प्रश्लिष्यते स च साहचर्याद्वकारस्थानिक उपधाभूतो धातुस्थश्च गृह्यते । ऊठ्युपधाग्रहणमिति वार्तिकस्याप्ययमेवाशयस्तेन विश्वौह इत्यादावुक्तस्वरासिद्ध्योठ्ग्रहणस्य ज्ञापकत्वं युक्तमेवेति वदन्ति । अपरे तु वाहऊडितिसूत्रस्थभाष्यपर्यालोचनया प्रकृतपरिभाषाज्ञापकपरभाष्यस्वारस्येन च विश्वौह इत्यादावूडिदमिति

स्पष्टमेव । सत्यां ह्येतस्यां बहिरंगसंप्रसारणस्यासिद्धत्वा-ल्लघूपधगुणो न स्यात् । न च पुगन्तेति सूत्रे निमित्तमिको विशेषणमत एव भिनत्तीत्यादौ न गुण, एवं च नाजानन्तर्य्य इति निषेधात्कथं परिभाषाप्रवृत्तिरिति वाच्यम् ।

---

स्वराप्रवृत्तिरेव । अत एव भाष्यकृतोठ्ग्रहणाभावे स्वरांशे दोषो नोद्भावितः स्वरविधायके विश्वौह इत्युदाहरणं तु वृत्तिकारादिग्रन्थस्थं प्रमादादत्र मूले पतितं न त्वत्र दीक्षितसंमतिः । अत एव नागेशेनोक्तपरिभाषाज्ञापकविवेकावसरे एतन्न विचारितं तथा चोठ्ग्रहणस्य ज्ञापकता सुस्थिरेति व्यवस्थापयन्ति । केचित्तु वाह ऊठ्सूत्रे ऊठ्करणापेक्षयैकमात्रालाघवानुरोधेन स्वरप्रकरणे उहेरधिकस्य ग्रहणेन प्रष्ठौह इत्यादाविष्टस्वरासिद्ध्योठ्ग्रहणस्य ज्ञापकत्वं सुस्थम् । न चैवं वहतेः क्विपि शसादेरुक्तस्वरापत्तिरिति वाच्यम् । ज्ञापकपरभाष्यप्रामाण्येनेदृशानामनभिधानकल्पनेनादोषादिति वदन्ति । यत्तु वाह इति सूत्रेण ह्रस्व एवोठ् विधेयः स्वरविधायकेपि ह्रस्वस्यैव ग्रहणं कार्यं जूर इत्यत्र स्वरसिद्ध्यर्थं ज्वरत्वरेत्यनेन उ उठिति प्रश्लिष्य ह्रस्व एवोठ् विधेयः । एवं च्छ्वोरित्यत्रैत्येधत्यूठित्यत्र च ह्रस्व एवोठ् पाठ्यः । तेन धौतमित्यादौ वृद्ध्यादिसिद्धिरेवं च दीर्घोठ्ग्रहणं परिभाषायां ज्ञापकमिति । तन्न । स्वांशे चारितार्थ्याभावेन तस्योक्तार्थज्ञापकत्वासंभवात् । आवयतेः क्विपि उ उ इति जाते वार्णपरिभाषया सवर्णदीर्घं बाधित्वा लघूपधगुणे वृद्धौ च अवाविति रूपापत्तेश्च । सिद्धांते ऊठः सत्वे तु गुणस्याप्राप्त्या औ इत्यस्यैवेष्टत्वात् । संप्रसारणस्यासिद्धत्वादिति । नन्वस्यासिद्धत्वेपि पूर्वरूपस्य बहिरङ्गत्वाभावेनासिद्धत्वाभावात्तदुत्तरं लघूपधगुणः स्यात् । बहिरंगस्थानिककार्यस्यासिद्धत्वकल्पने तु न मानम् । शिवोर्च्य इत्यादावसिद्धरूस्थानिकोकारे परत आद्गुण इत्यस्यानापत्तेश्चेति चेद, त्र केचित्, संप्रसारणाच्चेत्यनेन परमात्रनिवृत्तिः क्रियते तावताप्युभयनिवृत्तिः संपन्ना । एकसत्त्वेपि द्वयं नास्तीतिप्रतीतेः संप्रसारणस्य सत्त्वेप्युभयसत्ताऽभावस्य वक्तुं शक्यत्वात् । न चैवं स्थादिवद्भावेन विश्वौह इत्यादावाकारवृत्त्य-

प्रत्ययस्यांगांश उत्थिताकांक्षत्वेन तत्रैवान्वयात् पुगन्ते-त्यादौ कर्मधारयाश्रयणेन प्रत्ययपरांगावयवलघूपधारूपे-को गुण इतीकोगुणवृद्धी इति सूत्रभाष्यसंमते ऽर्थे भिन-त्तीत्यादावदोषाच्च ॥ अकारान्तोपसर्गे ऽनकारांते चोपपदे वहेर्वाहेर्वा ण्विविचावनभिधानान्न स्त एव । वार्यूहे-त्यादितूहतेः क्विपि बोध्यम्। धातूनामनेकार्थत्वान्ना-

---

च्त्वातिदेशादूठो यणापत्तिरिति वाच्यम् । अत्राकारस्थानिकादेशस्य परनिमित्तकत्वाभावेन स्थानिवत्त्वाप्राप्तेः । संप्रसारणाच्चेत्यस्येकोयण-चीत्येतदपवादत्वेनाजव्यवहितपूर्वसंप्रसारणेतरत्वेनेक्पदार्थे संकोचेन तद-प्राप्तेश्च। ईदृशप्रकारस्तु पूर्वरूपादौ प्रातिशाख्ये सुप्रसिद्ध इति प्राहुः । अ-न्ये तु हल इति सूत्रारम्भसामर्थ्येन यावतां भिनेति न्यायेनोठ्ग्रहणसाम-र्थ्येन च संप्रसारणस्थानिकपूर्वरूपे संप्रसारणतुल्यत्वातिदेशेन तद्वृत्तिबहि-रंगत्वस्य पूर्वरूपेपि सत्वेन प्रकृतज्ञापकं सुयोजम् । अत एव जागृढ इत्या-दौ न रुगादय इति दिक् । प्रत्ययस्यांगांशे उत्थिताकाङ्क्षत्वेनेति । अ-वध्यंशे नित्यसाकांक्षरूपावच्छिन्नविधेयाश्रयत्वेन तत्त्वमित्यभिमानः । वस्तुतः प्रत्ययत्वस्य संकेतसंबन्धेन प्रत्ययपदरूपतया तस्योत्थिताकाङ्क्षत्वे मानाभावः। किं च तस्योत्थिताकांक्षत्वेप्यन्यत्रोत्थिताकांक्षे पुत्रत्वादा-वाकाङ्क्ष्यमाणस्य देवदत्तादेरन्वयस्येवात्राप्याकाङ्क्ष्यमाणाङ्गस्यैव प्र-त्ययपदार्थे ऽन्वयः स्यान्न तु प्रत्ययस्याङ्गपदार्थे तथा चाङ्गसंब-न्धिप्रत्ययपरकेक इत्यर्थे नाजानन्तर्यपरिभाषाप्रवृत्तिर्दुर्वारैव। अङ्गपदार्थे-स्य प्रत्ययघटितत्वेनोपस्थितत्वात्प्रत्ययस्याङ्गपदार्थे ऽन्वय इति तु क-थं चिद् युज्येत वक्तुम्। वस्तुतस्तु येननाव्यवधानमिति न्यायेनैकवर्णव्य-वधाने गुणशास्त्रस्य प्रवृत्तिस्वीकारेपि नाजानन्तर्यपरिभाषाया व्यवधाने प्र-वृत्तिस्वीकारे मानाभाव इति समाधानं वक्तुं युक्तम् । वहेर्वाहेरिति। व-ह वाहृ इत्यत्र दन्त्योष्ठ्यादी इत्यपरे इत्युक्ततया तस्य वाहेर्ग्रहणमत्र बोध्य-म्। णिजन्तस्य वाहेस्तु स्थानिवद्भावात्संप्रसारणाप्राप्तिरेव। विभाषापूर्वा-

र्थासंगतिः। प्रौह इत्याद्यसाध्वेव वृद्धेरप्राप्तेः । अस्योह-स्यानर्थक्यान्न प्रादूहोढेत्यस्यापि प्रवृत्तिः ॥ न च का-र्य्यकालपक्षे त्रिपाद्यामेतत्प्रवृत्तिर्दुर्वारेति वाच्यम् । पूर्वं प्र-ति परस्यासिद्धत्वादन्तरंगाभावेन पूर्वस्य तन्निरूपितब-हिरंगत्वाभावात्तया तस्यासिद्धत्वप्रतिपादनासम्भवात् । न चानया पूर्वस्यासिद्धत्वादभावेन तं प्रति परासिद्धत्वं पूर्वत्रेत्यनेन वक्तुमशक्यमिति वाच्यम् । एवं हि वि-निगमनाविरहादुभयोरप्यप्रवृत्त्यापत्तेः । किं च पूर्वत्रेत्य-स्य प्रत्यक्षत्वेन तेनानुमानिक्या अस्या बाध एवोचितः । अतः कार्यकालपक्षे ऽपि त्रिपाद्यामस्या अनुपस्थिति-

---

ह्णोति सूत्रे प्रष्ठौह आगतमिति भाष्यस्थलौकिकप्रयोगेण लोकेपि ण्वि-प्रत्ययानुमानमिति तु न युक्तम् । भाष्येपि वात्हधातुप्रयोगकल्पनेन तदुपपत्तौ लोके ण्व्यंतप्रयोगकल्पने मानाभावादित्यन्यत्र विस्तरः । पूर्वं प्रति । पूर्वबहिरङ्गपरिभाषां प्रति । परस्य । त्रैपादिकान्तरङ्गशास्त्र-स्य । अन्तरङ्गाभावेन । अन्तरङ्गशास्त्रत्वेन रूपेण ज्ञानाभावेन । पूर्व-स्य । सापादिकबहिरङ्गस्य । तया । बहिरङ्गपरिभाषया । नचानये-ति । अयं भावः । पूर्वं बहिरङ्गपरिभाषाप्रवृत्त्या सापादिकबहिरङ्गस्य त्रैपादिकान्तरङ्गदृष्ट्या ऽसिद्धत्वेन पश्चात्प्रवर्तमानपूर्वत्रासिद्धशास्त्रघटक-पूर्वपदेन तस्य ग्रहणासंभवात्सापादिकबहिरङ्गदृष्ट्या त्रैपादिकान्तरङ्गस्या-सिद्धत्वाभावेन तस्य निष्टङ्कं प्रवृत्त्या त्रिपाद्यामन्तरङ्गपरिभाषाप्रवृत्तिः सुलभेति । उभयोरप्यप्रवृत्त्यापत्तेरिति । तथा चान्तरङ्गपरिभाषायास्त्रि-पाद्यामप्रवृत्तिः सिद्धेति भावः । नन्वेवं यत्र त्रैपादिकान्तरङ्गस्य नि-त्यत्वं तत्र तस्य पूर्वं प्रवृत्त्यापत्तिरित्यरुचेराह । किं चेति । अत एवा-प्राङ्कोश्चेति । समकालप्राप्तबहिरङ्गस्यासिद्धत्वस्वीकारादेवेत्यर्थः । पर-

रेव ॥ अत एव कार्यकालपक्षमेवोपक्रम्योक्तयुक्तीरुक्त्वातो ऽयुक्तो ऽयं परिहारो न वा बहिरंगलक्षणत्वादित्युक्तं विसर्जनीयसूत्रे भाष्ये सिद्धान्तिना । त्रिपादीस्थे ऽन्तरंगे कर्तव्ये ऽयं परिहारो न युक्त इति तदर्थः । किं तु वचनमेवारब्धव्यमिति तदाशयः ॥ अत एव निगाल्यत इत्यादौ लत्वार्थं तस्य –दोष इति वचनमेवारब्धम् । अन्यथान्तरंगत्वाण्णिलोपात्पूर्वं वैकल्पिकलत्वे तद्वैयर्थ्यं स्पष्टमेव । ये ऽपि लक्ष्यानुरोधादानुमानिक्याप्यन्तरंगपरिभाषया प्रत्यक्षसिद्धस्य पूर्वत्रेत्यस्य बाधं वदन्ति ते ऽपि लक्षणैकचक्षुर्भिर्नादर्तव्या इति दिक् ॥

अत एव ओमाङोश्चेत्याङ्ग्रहणं चरितार्थम् । ताद्धि खट्वा आ ऊढेत्यत्र परमपि सवर्णदीर्घं बाधित्वान्तरंगत्वाद् गुणे कृते वृद्धिप्राप्तौ पररूपार्थम् । साधनबोधकप्रत्ययोत्पत्त्यनन्तरं पूर्वं धातोरुपसर्गयोगे पश्चात् खट्वाशब्दस्य समुदायेन योगाद् गुणस्यान्तरङ्गत्वमिति संप्रसारणाच्चेति

---

मपि सवर्णदीर्घमिति । न च सित आ उष्णमित्यत्र गुणस्यान्तरङ्गत्वाभावेन परत्वाद्दीर्घे प्राप्ते ऽनित्यान्नित्यं बलवदितिज्ञापनार्थमाङ्ग्रहणमुपष्टम्भकं स्यात् । किं च खट्वा आ ऊढ इत्यत्रापि नित्यत्वादेव गुणे कृते वृद्धिबाधनार्थमाङ्ग्रहणं चरितार्थमिति कथमुक्तार्थे ज्ञापकमिति वाच्यम् । उभयत्र गुणस्य नित्यत्वेप्यपवादस्य ततोपि बलवत्त्वेन पूर्वं दीर्घे उक्तरूपसिद्ध्याङ्ग्रहणवैयर्थ्येनोक्तार्थज्ञापने बाधकाभावात् । उक्तार्थे ज्ञापिते त्वपवादो यद्यन्यत्र चरितार्थ इति न्यायेनान्तरङ्गस्यापवादबाधकत्वा-

सूत्रे भाष्ये स्पष्टम् । एहीत्यनुकरणस्य शिवादिशब्दसंबन्धे तु नास्य प्रवृत्तिर्ज्ञापकपरसंप्रसारणाच्चेति सूत्रस्थभाष्यप्रामाण्येनानित्यं प्रकृतिवदनुकरणमित्यातिदेशमादाय लब्धाङ्त्वे एतदप्रवृत्तेः । यत्तु पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन । उपसर्गेण तत्संज्ञकशब्देन साधनेन कारकेण तत्प्रयुक्तकार्येण च । अत एवानुभूयतइत्यादौ सकर्मकत्वात् कर्मणि लकारसिद्धिरिति, तन्न । क्रियायाः साध्यत्वेन बोधात्साध्यस्य च साधनाकांक्षतया तत्सम्बन्धोत्तरमेव निश्चितक्रियाबोधेन साधनकार्यप्रवृत्त्युत्तरमेव क्रि-

---

त्पूर्वं गुणे वृद्धिबाधनार्थमाङ्ग्रहणं स्वांशे चरितार्थम् । एहीति । ए, ही, त्यनुकरणद्वयं न त्वेकमनुकरणमिति भावः । एतेन प्रकृतिवदिति न्यायेन प्रकृतिपर्याप्तधर्मस्यैवातिदेशेन एकारआङ्त्वातिदेशासंभवादयुक्तोयं ग्रन्थ इत्यपास्तम् । केचित्त्वस्यवामीयमित्यादावनुकरणैकदेशेपि सुप्त्वात्प्राप्तलुकः प्रकृतिवदनुकरणमित्यस्यानित्यत्वेन भाष्यकृता वारणादनेन न्यायेन प्रकृतिघटकवृत्तिधर्मस्यानुकरणैकदेशेप्यतिदेशकल्पनान्नात्र दोषः । अत एव जहिजोड इत्यादौ समुदायानुकरणेप्यवयवस्य सुप्त्वात्तल्लोपः सिध्यतीति वदन्ति । क्रियायाः साध्यत्वेनेति । अयं भावः । साध्यत्वेन क्रिया प्रथममुपतिष्ठते तस्याः साधनांशे नित्यसाकाङ्क्षत्वेन ततः साधनत्वेन साधनमुपतिष्ठते ततस्साध्यविशेषस्ततः साधनविशेषस्ततस्तदवान्तरसाध्यसाधनोपस्थितिरेतदुपस्थितिक्रमेणैव तत्तच्छब्दप्रादुर्भावस्तथाचोपसर्गप्रादुर्भावप्रयोजकानुभवादिरूपसाध्यविशेषोपस्थितितः पूर्वमेव लकारप्रादुर्भावप्रयोजकसाधनोपस्थितिरूपैकनिमित्तस्य पूर्वं सत्वेनोपसर्गप्रादुर्भावात्पूर्वमेव कर्मलकारप्रादुर्भावः । संचस्कारेत्यादौ तु द्वित्वस्य शब्दमात्रनिमित्तकत्वेन ततः प्रागेव सुण्निमित्तकस्य भूषणाद्यर्थस्योपस्थित्यान्तरङ्गत्वाद द्वित्वात्पूर्वमेव सुट् । एतदेव यदुपसर्गनिमित्तकं कार्य-

यायोगनिमित्तोपसर्गसंज्ञकस्य संबन्धौचित्यात् । अत एव सुट्कात्पूर्व इति सूत्रे पूर्वं धातुरुपसर्गेणेत्युक्त्वा नैतत् सारं पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेत्युक्त्वोक्तयुक्तयास्यैव युक्तत्वमुक्तं, साधनं हि क्रियां निर्वर्तयतीत्यादिना भाष्ये । उपसर्गद्योत्यार्थान्तर्भावेण धातुनैवार्थाभिधानादुक्तेषु कर्माणि लकारादिसिद्धिः । पश्चाच्छ्रोतृबोधाय द्योतकोपसर्गसंबन्धः ॥ एवं चान्तरङ्गतरार्थकोपसर्गनिमित्तः सुट् संकृतीत्यवस्थायां द्वित्वादितः पूर्वं प्रवर्तते ततो द्वित्वादि ॥ अत एव प्रणिदापयतीत्यादौ णत्वं यदागमा इति न्याये-

---

मित्यादिना स्पष्टं वक्ष्यतीति दिक् । इत्यादिनेति । तथा च सुट् कात्पूर्व इत्यत्र भाष्यं, धातूपसर्गयोः कार्यमन्तरंगम् । कुत एतत् । पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेत्युत्क्वा नैतत्सारं पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण साधनं हि क्रियां निर्वर्तयति तामुपसर्गो विशिनष्टीति । उपपदमातिङ् गतिर्गतावित्यादिसूत्रेषु भाष्ये ऽप्ययमर्थः परिशीलत इति बोध्यम् । उपसर्गद्योत्यार्थान्तर्भावेणेति । अयं भावः । उपसर्गाणां द्योतकत्वेन विशिष्टार्थे धातूनामेव शक्तिरिति विशिष्टैव क्रिया साधनेन साध्यते न तु साधनादवाप्तरूपैषान्यतो विशेषं लभते । तदुक्तं भाष्ये । यस्त्वसौ धातूपसर्गयोरभिसंबन्धस्तमभ्यन्तरं कृत्वा धातुस्साधनेन युज्यते । अवश्यं चैतदेवं विज्ञेयम् । योहि मन्यते पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति । आस्यते गुरुणेत्यकर्मकः । उपास्यते गुरुरिति केन सकर्मकः स्यादिति । अत्र भाष्ये तमभ्यन्तरमित्यस्योपसर्गद्योत्यमर्थमन्तर्भाव्येत्यर्थः । योहीति । यदि साधनादवाप्तरूपा सा उपसर्गेण विशेषशालिनीत्यर्थस्तदा च नदी वहति भारं वहतीतिवदेवात्राकर्मकत्वादिव्यवस्थेत्यर्थः । णत्वमिति । पूर्वमुपसर्गयोगेप्यासिद्धशास्त्रेतिन्यायेन त्रैपादिकस्याप्रवृत्तेः, दीक्षितमतेप्यकृतेतिपरिभाषया पूर्वं णत्वम-

न समाहितं भाष्ये ॥ अत एव प्रत्येति प्रत्यय इत्यादि- सिद्धिः । अन्यथान्तरंगत्वात् सवर्णदीर्घे रूपासिद्धिः ॥ यद्रुपसर्गनिमित्तकं कार्यमुपसर्गार्थाश्रितं विशिष्टोपसर्ग- निमित्तत्वात्तदंतरंगम् । यत्तु न तथा, तत्र पूर्वागतसाध- ननिमित्तकमेवान्तरंगम् । अत एव न धात्विति सूत्रे प्रेद्ध इत्यत्र गुणो बहिरंग इति भाष्ये उक्तम् ॥ किंच पू- र्वमुपसर्गयोगे धातूपसर्गयोः समासे ऐकस्वर्याद्यापत्तिरि- त्युपपदमातिङिति सूत्रे भाष्ये स्पष्टम् ॥ भावार्थप्रत्ययस्या- पि पूर्वमेवोत्पत्तिः । अत एव णेरध्ययने इति निर्देशः संगच्छेत । इदं च सामान्यापेक्षं ज्ञापकं भावतिङो ऽपि पूर्वमुत्पत्तेः । अन्यथा तत्र समासापात्तिः । तिङि त्वति- ङिति निषेधान्न तत्र दोषो यदि भावतिङ्युपसर्गयोगो ऽस्तीत्यलम् ॥

---

युक्तमेवेति प्रागुक्तमनुसन्धेयम् । प्रत्यय इति । वार्णपरिभाषया सव- र्णदीर्घं बाधित्वा पूर्वमेव गुणप्रवृत्तेरिदं मन्दप्रयोजनम् । किं च पूर्वमुप- सर्गयोग इति । उपसर्गसंज्ञकशब्देन प्रत्ययोत्पत्तेः प्राक् संबन्धे इत्यर्थः । ऐकस्वर्याद्यापत्तिरिति । आदिना ऽन्वभवदित्यादावभीष्टस्य शाकलप्र- कृतिभावस्य नसमासइतिनिषेधापत्तिसंग्रहः । राद्धान्ते तु पूर्वं तिङुत्पत्त्या ऽतिङितिनिषेधेन समासाप्राप्त्योक्तनिषेधानवसरः । अतिङ्ग्रहणसामर्थ्या- च्च लानेतन तद्घटकेन वा न समास इति दिक् । भावार्थकप्रत्ययस्या- पीति । तस्य साधनत्वाभावेप्युपसर्गप्रादुर्भावनिमित्तात्पूर्वमेव तन्निमित्त- स्योपस्थित्या भावार्थकप्रत्ययस्यापि पूर्वं प्रादुर्भावः । अत्रैवोपोद्बलकमा- ह । अत एवेति । यदीति । विक्रियतइत्यादौ भावतिङ्स्थलेपि विकार- रूपार्थबोधनायोपसर्गसंबन्धस्यावश्यकत्वाद्बहुशस्तादृशप्रयोगाणामुपलम्भा-

यत्तु विशेषापेक्षात्सामान्यापेक्षमन्तरंगं विशेषापेक्षे विशेषधर्मस्याधिकस्य निमित्तत्वात् । यथा रुदादिभ्यः सार्वधातुक इत्यत्र रुदादित्वं सार्वधातुकत्वं च । तत्र सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं प्रत्ययस्य प्रत्ययत्वज्ञानं चावश्यकमिति यासुडन्तरंगः । एतेन यत् अनुदात्तङित इति सूत्रे कैयटेनोक्तं लमात्रापेक्षयान्तरंगास्तिबादयो लकारविशेषापेक्षत्वाद् बहिरंगाः स्यादय इति, तत्परास्तम् । विशेषापेक्षत्वे ऽपि तस्य सामान्यधर्मनिमित्तकत्वाभावेन तत्वस्य दुरुपपादत्वात् । परनिमित्तकत्वेन स्यादीनां बहिरंगत्वाच्चेति, तन्न । विशेषस्य व्याप्यत्वेन व्यापकस्यानुमानेनोपस्थितावपि तस्य निमित्तत्वे मानाभावेनाधिकधर्मनिमित्तकत्वानुपपादनात् । भाष्य एवंविधान्तरंगबहिरंगभावस्य क्वाप्यनुल्लेखाच्च । यत्तु मतुप्सूत्रे भाष्ये पञ्च गा-

---

च्चेदमयुक्तमिति बोध्यम् । यत्त्विति । यत्र कार्ये विशेषधर्मस्तत्सामान्यधर्मश्चेत्युभयं निमित्तं तदपेक्षया तत्सामान्यधर्ममात्रनिमित्तकमल्पापेक्षत्वादन्तरंगम् । अत एव रुद्यादित्यादाविडादिविधौ सार्वधातुकत्वज्ञानाय धातुत्वप्रत्ययत्वरूपसामान्यज्ञानस्यावश्यकत्वेन तत्सामान्यविशेषोभयनिमित्तकत्वेनेटो बहिरङ्गत्वम् । यासुटो धात्वधिकारीयतया धातुमात्रनिमित्तकत्वेनान्तरङ्गत्वमिति बोध्यम् । एतेनेति । सामान्यविशेषोभयनिमित्तकस्यैव बहिरङ्गत्वमित्यस्य स्वीकारेणेत्यर्थः । सामान्यधर्मनिमित्तकत्वाभावेनेति । न च स्यादिविधेर्लृलुडादिनिमित्तकत्वेन तत्र लृत्वादिव्यापकलत्वादेरपि निमित्तत्वेन तदुभयनिमित्तकत्वाद्बहिरङ्गत्वं सुवचमिति वाच्यम् । फलाभावेन लत्वस्य स्यादिविधावनिमित्तत्वेनादोषात् । ननु रुदादिभ्य इत्यत्रापि धातुत्वादेर्निमित्तत्वे फलाभावस्तुल्य इत्यरुचेराह । परनिमित्त-

वो यस्य सन्ति स पञ्चगुरित्यत्र मतुप्प्राप्तिमाशंक्य प्रत्येकमसामर्थ्यात् समुदायादप्रातिपदिकत्वात् समासात् समासेनोक्तत्वादिति सिद्धान्तिनोक्ते नैतत्सारमुक्ते ऽपि हि प्रत्ययार्थे उत्पद्यते द्विगोस्तद्धितो यथा पाञ्चनापितिरिति पूर्वपक्ष्युक्तिर्भाष्ये । द्विगोर्लुगनपत्ये इति लुग्विधानात्तद्धितार्थेद्विगोस्तद्धितो भवति पञ्चगुशब्दश्च द्विगुरिति तदाशयं कैयटः । ततो द्वैमातुरः पाञ्चनापितिः पञ्चसु कपालेषु संस्कृत इत्यादौ सावकाशद्विगोर्बहुव्रीहिणा प्रकृते परत्वाद् बाध इत्याशयेन नैष द्विगुः कस्तर्हि बहुव्रीहिरिति सिद्धान्तिनोक्ते तमवकाशमजानानो ऽपवादत्वाद् द्विगुः प्राप्नोतीति पूर्वपक्षी । अन्यपदार्थे सुबन्तमात्रस्य विधीयमानबहुव्रीहेः संख्यायास्तद्धितार्थे विधीयमानो द्विगुर्विशेषविहितत्वाद् बाधकः प्राप्नोतीति कैयटः। ततः सिद्धान्त्येकदेश्याह । अन्तरंगत्वाद् बहुव्रीहिः । कान्तरंगता । अन्यपदार्थे बहुव्रीहिर्विशिष्टे ऽन्यपदार्थे द्विगुस्तस्मिंश्चास्य तद्धिते ऽस्तिग्रहणं क्रियत इति । अधिकास्त्यर्थापेक्षमत्वर्थनिमित्तो द्विगुर्बहिरंग इति कैयट इति । नैषा सिद्धान्त्युक्तिरेतावताप्यपवादत्वाहानेः । अच्सामान्यापेक्षयणो विशिष्टसवर्णाजपेक्षदीर्घेण

---

कत्वेनेति । तस्मिंश्चास्येति । अस्य द्विगोरर्थद्वारा निमित्तभूते तस्मिन

बाधदर्शनात् । किञ्चोक्तरीत्या परत्वेन बाधसिद्धेः । किं चात्राधिकापेक्षत्वेनैव बहिरंगत्वम् । न केवलविशेषापेक्षत्वेनेति नैतद्भाष्यारूढं विशेषापेक्षस्य बहिरंगत्वम् । अत एव सुबन्तसामान्यापेक्षो बहुव्रीहिस्तद्विशेषापेक्षो द्विगुरिति नोक्तं भाष्ये । न चार्थकृतबहिरङ्गत्वस्यानाश्रयणादिदमयुक्तम् । एकदेश्युक्तित्वेनादोषात् । अत एवास्तिग्रहणं नोपाध्यर्थं किं त्वास्तिशब्दान्मतुबर्थमिति त्वदभिमतं बहिरंगत्वमपि द्विगोर्नास्तीति प्रतिपाद्य सिद्धान्तिना मत्वर्थे द्विगोः प्रतिषेधो वक्तव्य इति वचनेनैतत्सिद्धमित्युक्तम् । अत एव तदोः सः साविति सूत्रे ऽनन्त्ययोरिति चरितार्थम् । अन्यथा प्रत्ययसामान्यापेक्षत्वेनान्तरंगत्वादन्त्यस्यात्वे ऽनन्त्यस्यैव सत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव ॥ पादः पदिति सूत्रे भाष्यकैयटयोरप्येतदन्तरंगत्वाभाव एव सूचित इति सुधियो विभावयन्तु ॥

---

मंतुप्यस्तिग्रहणं क्रियतइत्यर्थः । नोपाध्यर्थमिति । शब्दशक्तिस्वभावादेव बहुव्रीहिवन्मतुपोप्यस्त्यर्थविषयतासंभवादिति भावः । तद्वैयर्थ्यं स्पष्टमेवेति । वस्तुतस्सत्वं प्रतिपदोक्ततरत्वेन त्यदाद्यत्वबाधकं स्यादतोनन्त्यग्रहणमावश्यकमिति बोध्यम् । पादः पदितिसूत्रे भाष्यकैयटयोरिति । तत्र ह्यरुदितमरुदितेत्यत्रा ऽडपेक्षयान्तरङ्गास्तांतंताम इत्युक्तं भाष्ये । कैयटे च प्राग् लादेशेभ्यो धात्वधिकारात्तामादीनामन्तरङ्गत्वमुक्तम् । एवंविधान्तरङ्गबहिरङ्गभावसत्वे तु तेषां विशेषापेक्षत्वेन बहिरङ्गत्वा-

नन्वेवमसुस्रुवदित्यत्र लघूपधगुणादुवङो ऽल्पनिमित्तत्वाभावदुवङ् नस्यादिति चेत् । न । तत्रान्तःकार्यत्वरूपान्तरंगत्वसत्वात् । अन्तःकार्यत्वं च पूर्वोपस्थितनिमित्तकत्वमंगशब्दस्य निमित्तपरत्वात् ॥ इदमन्तरंगत्वं लोकन्यायसिद्धमिति मनुष्यो ऽयं प्रातरुत्थाय शरीरकार्याणि करोति ततः सुहृदां ततः संबन्धिनामर्थानामपि जातिव्यक्तिलिंगसंख्याकारकाणां बोधक्रमः शास्त्रकृत्कल्पितस्तत्क्रमेणैव च तद्बोधकशब्दप्रादुर्भावः कल्पित इति तत्क्रमेणैव तत्कार्याणीति पट्व्येत्यादावन्तरंगत्वात्पूर्वं पूर्वयणादेशः परयणादेशस्य बहिरंगतया ऽसिद्धत्वादित्यनेनाचः परस्मिन्निति सूत्रे भाष्ये स्पष्टम् ॥ त-

---

दन्तरङ्गत्वप्रतिपादनमसंगतं स्यादिति भावः । वस्तुतस्तामादीनां प्रत्ययविशेषापेक्षत्वेपीटः प्रकृतिविशेषापेक्षत्वेन समत्वान्न प्राचां पादः पदितिसूत्रस्थभाष्यविरोध इति बोध्यम् । अल्पनिमित्तकत्वाभावादिति । प्राचीनमतेनाप्यन्तरङ्गत्वालाभ इति बोधनार्थमिदमिति भावः । अन्तःकार्यस्वरूपेति । यदीयसप्तम्यन्तनिमित्तात्पूर्वं यदीयसप्तम्यन्तनिमित्तं तदन्तरङ्गमित्यर्थः । नन्वत्र सार्वेतिगुणात्पूर्वं नित्यत्वाच्चङि स्रु अदिति स्थिते द्विर्वचनेचीतिनिषेधादुवङोप्राप्तौ द्वित्वात्परत्वादोणेर्ऋदित्करणेनोपधाकार्यमात्रस्य प्राबल्यबोधनाच्च पुगन्तेतिगुणो दुर्वार इति चेन्न । द्वित्वस्य पूर्वोक्तपरिष्कृतान्तरङ्गत्वेन गुणात्पूर्वं प्रवृत्त्या दोषाभावात् । ज्ञापकसाजात्यादृदित्करणेनापि चङ्निमित्तकोपधाकार्यस्यैव प्राबल्यबोधनेनात्र तद्विषयाभावाच्च । पट्व्या मृद्व्येत्यत्रापि परयण्निमित्तात्पूर्वं पूर्वयण्निमित्तस्य सत्वेनान्तरङ्गत्वमूह्यम् । ईदृशान्तरंगत्वस्यासिद्धतानियामकत्वे मानं च प्रकृतलोकन्यायादिकं बोध्यमित्यन्यत्र विस्तरः । अन्तः कार्यत्वं चानेकविधं तत्र प्रकृते कीदृशं तद् गृह्यतइत्यत आह । पूर्वोपस्थितेति ।

दपि युगपत्प्राप्तौ पूर्ववृत्तिनियामकमेव यथा पट्व्येत्यत्र पदस्य विभज्यान्वाख्याने, न तु जातस्य बहिरंगस्य तादृशे ऽन्तरंगे ऽसिद्धतानियामकं प्रागुक्तलोकन्यायेन तथैव लाभादिति वाह ऊठ् सूत्रे कैयटे स्पष्टम् । अत एव वाय्वोरित्यादौ वलि लोपो यणः स्थानिवत्वेन वारितो ऽचः परस्मिन्नित्यत्र भाष्यकृता । क्रमेणान्वाख्याने तूक्तोदाहरणे पूर्वप्रवृत्तिकत्वमन्तरंगत्वं बहिरंगस्यासिद्धत्वमपि निमित्ताभावादप्राप्तिरूपं बोध्यम् ॥ यत्त्वेवंरीत्या पूर्वस्थानिकमप्यन्तरंगमिति, तच्चिन्त्यम् । स्रजिष्ठ इत्यादौ विन्मतोर्लुकि टिलोपस्यापवादविन्मतोर्लुक्प्रवृत्त्या जातिपक्षाश्रयणेन वारणप्रयासस्य प्रकृत्यैकाजिति सूत्रप्रयोजनखण्डनावसरे भाष्यकृतकृतस्य नैष्फल्यापत्तेः । त्वदुक्तरित्या विन्म-

---

अनुपदमेवास्यार्थ उक्तः । तदपीति । अन्तःकार्यत्वरूपान्तरंगत्वं चेत्यर्थः । अत एवेति । अन्तःकार्यत्वरूपान्तरङ्गत्वस्य समकालप्राप्तबहिरङ्गासिद्धत्वनियामकत्वादेवेत्यर्थः । पदसंस्कारपक्षउक्तान्तरङ्गत्वमुपपाद्य क्रमिकान्वाख्याने तत्संगमयति । क्रमेणेति । अत्र पक्षे वहिरङ्गत्वाद्युपपादयति । अप्राप्तिरूपमिति । जातिपक्षाश्रयणेनेति । केचित्तु विनो लोपस्य तक्रन्यायेन टिलोपापवादत्वात्तदुत्तरं टिलोपाप्राप्तेर्जातिपक्षाश्रयणरूपप्रयासेनैतद्भाष्यमेकदेश्युक्ति, रुपायस्योपायान्तरादूषकत्वे तु ममापि तुल्यम् । पट्व्येत्यादावप्येतदन्तरङ्गत्वस्यैव भाष्यकृताश्रयणं कृतमित्यपि शक्यते वक्तुम् । किं च विश्वौहो ग्रामणिनी इत्यादावपि त्वद्रीत्या कार्यिणो निमित्तत्वानापत्या बहिरंगपरिभाषया वारणासंगतिः स्यादिति परिभाषायामंगपदस्य कारणमात्रपरत्वेन कार्यमनुभवन्निति प-

तोर्लुको बहिरंगासिद्धत्वेनानायासतस्तद्वारणात् । भाष्य-ईदृशरीत्या बहिरंगासिद्धत्वस्य क्वाप्यनाश्रयणाच्च ॥ परिभाषायामंगशब्दस्य निमित्तपरत्वाच्च ॥

इयं चोत्तरपदाधिकारस्थबहिरंगस्य नासिद्धत्वबोधिकेतीच एकाचोमिति सूत्रे भाष्ये पूर्वपक्ष्युक्तिरिति सा नादर्तव्या परन्तप इत्यादावनुस्वारे नासिद्धत्वं सुमश्चि-

---

रिभाषाया विषयाभावात्परिभाषा ऽसत्वस्य पूर्वमुपपादितत्वाच्चेति प्राहुः । नन्वेवं परंतप इत्यत्रानया मुमोसिद्धत्वादनुस्वारो द्विषंतप इत्यत्र संयोगांतलोपश्च न स्यादिति चेत् । तत्राह । इयं चेति । इच एकाच इति । नन्वेतद्भाष्यबलादुत्तरपदाधिकारे एतदप्रवृत्तिस्वीकारे श्रियंमन्यं ब्राह्मणकुलमित्यत्रापीच एकाच इति विहितस्यामो बहिरंगासिद्धत्वाभावात्स्वमोरिति लुगापत्तिरित्यत आह । पूर्वपक्ष्युक्तिरिति । उत्तरपदाधिकारे एतस्या अप्रवृत्तिपरा भाष्योक्तिः पूर्वपक्ष्युक्तिरित्यर्थः । पूर्वोक्तदूषणोद्धारप्रकारमाह । परंतप इति । तत्र हि भाष्ये-अथेह कथं भवितव्यं श्रियमात्मानं मन्यते ब्राह्मणकुलं श्रियं मन्यं श्रिमन्यं वेति प्रश्ने श्रियं मन्यामीति भवितव्यमित्युक्त्वा स्वमोरिति लुक् कस्मान्न भवतीति प्रश्ने सुपोधात्विति लुग्वद्बाध्यसामान्यचिन्तया ऽमुविधिसामर्थ्याद्बाध्यतइत्युत्तरिते बाध्यविशेषचिन्तामाश्रित्य सुपोधात्विति लुको नामाप्तावपि स्वमोरित्यस्य पुंस्यप्राप्त्या नाप्राप्तत्वाभावात्कथं तेन बाध इति पूर्वपक्षिणा पृष्टे एवं तर्ह्यन्तरंगे लुकि बहिरंगस्यामो ऽसिद्धत्वान्न स्वमोरिति लुगिति सिद्धान्तिनोक्ते नैषा परिभाषोत्तरपदाधिकारे शक्या विज्ञातुम् । इह हि दोष स्यात्परंतपः, तस्माच्छ्रिमन्यमित्येव भावितव्यमित्युक्तम् । न्यायाप्रवृत्तिप्रयोजनान्यथासिद्ध्या चास्याः पूर्वपक्ष्युक्तित्वं स्फुटमेव । अत्र विषये श्रीशब्दो ब्राह्मणकुले स्वलिंगपरित्यागेन वर्तते यथा गोपादयः पुंयोगाः स्त्रियां वर्तमानाः स्वलिंगमपहाय स्त्रीलिंगमुपाददत इति स्वमोरित्यस्य प्राप्तिरिति कैयटः । ननु भाष्यकारवचनप्रामण्या-

पाद्यां तदप्रवृत्तेः ॥ नव्यमते ऽपि यथोद्देशपक्षाश्रयणेनान्यथासिद्धोदाहरणदानेन तस्य तदुक्तित्वमावश्यकमित्याहुः। आभीये ऽन्तरंगे आभीयस्य बहिरंगस्य समानाश्रयस्य नानेनासिद्धत्वमसिद्धत्वादित्यसिद्धवत्सूत्रे भाष्ये स्पष्टम् ॥ एवं सिचि वृद्धेर्येननाप्राप्तिन्यायेनान्तरंगबाध-

---

विशेषादेवं तर्ह्यन्तरंगे लुकीत्यस्यैव कुतो नैकदेश्युक्तित्वमुरीक्रियत इति चेत्तत्राह। नव्यमतेपीति। दीक्षितादिमतेपीत्यर्थः। केचित्तु श्रियंमन्यमित्यत्रामुविधिसामर्थ्याद् बाध्यसामान्यचिन्ताश्रयणेन स्वमोरिति लुको बाधः। एवं तर्ह्यन्तरंगे लुकीति भाष्यमेवैकदेश्युक्तिरेवं तर्हीत्यभ्युपगमवादेन तत्प्रवृत्तेः। इयमुत्तरपदाधिकारे न प्रवर्ततइत्येव सिद्धान्त्युक्तिः। परंतपइत्यादौ त्रिपाद्यामेतदप्रवृत्त्या दोषवारणेपि महाब्राह्मणो ऽष्टाकपालं परस्मैपदं सर्वेषांपुत्र इत्यादावात्वालुकामसिद्धत्वेन सवर्णदीर्घस्मायाद्यनापत्तेरिति वदन्ति। नन्वेवमपि पपुष इत्यादावनया संप्रसारणस्यासिद्धत्वेनातो लोप इटिचेत्यादेरनापत्तिरत आह। आभीयेन्तरंग इति। अस्या वाहऊठ्सूत्रस्थत्वेनाभीयतया ऽऽभीयान्तरंगस्यातोलोपादेरसिद्धवदत्रेति सूत्रेण पूर्वत्रासिद्धमित्यनेन त्रिपाद्या इवासिद्धत्वेनान्तरंगशास्त्रत्वेन रूपेण तेषां ज्ञानाभावेनासिद्धत्वप्रतिपादनासंभवात्। परिभाषाणां विधिनिमित्तनिमित्तकत्वादस्या अन्तरंगातोलोपादिसमानाश्रयत्वं बोध्यम्। असिद्धवत्सूत्रप्रत्याख्याने तु नाजानन्तर्ये इति निषेधनानित्यत्वाद्वोक्तपरिभाषाया अप्रवृत्तिरिति दिक्। नन्वचिरायीदजिरायीदित्यत्रान्तरंगत्वाद् गुणे ऽयादेशे च यान्तत्वाद् वृद्धिनिषेधः स्यादतस्तद्वारणार्थं न सिच्यन्तरंगमस्तीत्यन्तरंगपरिभाषाया निषेधरूपवचनान्तरं वक्तव्यम्। अत्र ज्ञापकं च ह्मयन्तेतिसूत्रे श्विग्रहणम्। अन्यथा ऽश्वयीदित्यत्र गुणायादेशयोः कृतयोर्यान्तत्वादेव निषेधसिद्धेः किं तेन। तेनानैषीदचैषीदित्यादौ न गुण इति केषांचिदुक्तिः सा निष्फलेति वक्तुमुपक्रमते। एवं सिचीति। अन्तरंगेति। गुणरूपेत्यर्थः। बाधकत्वमूलकमिति। अचैषीदित्यत्र लघूपधगुणस्यापि बाध्यसामान्यचिन्ताश्रयणेन वृद्ध्या

कत्वमूलकं न सिच्यन्तरंगमस्तीतीको गुणेति सूत्रे भाष्ये स्पष्टम् ॥ ५० ॥

नन्वेवमक्षद्‍‍य्युरित्यादौ बहिरंगस्योठो ऽसिद्धत्वादंतरंगो यण् न स्यादत आह ॥

## नाजानंतर्ये बहिष्ट्वप्रक्लृप्तिः ५१

अत्र षत्वतुकोरिति सूत्रस्थं तुग्ग्रहणं ज्ञापकम् ।

---

बाधसंभवेनादोष इति बोध्यम् । इकोगुणेति सूत्रे भाष्यइति । तत्र हि वृद्धिविधौ स्थानिनिर्देशात्सिचिवृद्धे रिग्लक्षणत्वसंपादनद्वारा क्ङितीतिनिषेधप्रवर्तनाय वृद्धिग्रहणम् । न्यधूवीत् । नैतदस्ति । अन्तरंगत्वादुवङि कृते ऽनन्त्यत्वावृद्धिर्न प्राप्नोति । एवं तर्हि न सिच्यन्तरंगमस्ति । यदयं ह्म्यन्तेत्यत्र णिश्विग्रहणं करोतीत्युक्तम् ॥ ५० ॥

नन्वेवमिति । अत्र ह्यूठो घटकत्वं स्थानिद्वारा बोध्यम् । तुग्ग्रहणं ज्ञापकमिति । ननु वृक्षे च्छत्रमित्यत्र छे चेति नित्यतुगर्थं तदावश्यकमन्यथा पदान्ताद्वेति विकल्पापत्तिः । न च तेन सूत्रेण पदान्तपदाद्योरेकादेशस्यैवासिद्धत्वबोधनात्सप्तम्यन्ते तदभावेन तुग्ग्रहणं व्यर्थमेवेति वाच्यम् । वृक्षशब्देन इशब्दस्य समासेन निष्पन्नवृक्षे इतिरूपे तच्चारितार्थ्यमित्याशयादिति चेन्न । नचैङः पदान्तात्परो रुरस्तीति भाष्येण ज्ञापकपरप्रकृतभाष्येण चैषामनभिधानात् । षत्वसाहचर्याद्वैकल्पिकतुग्विषये एव तत्प्रवृत्तेः स्वीकाराच्च । नचान्तरङ्गानपि विधीन् बहिरंगोल्यप्बाधते इति वक्ष्यमाणवचनेनात्रैकादेशात्पूर्वं ल्यपस्तत्प्रयोजकसमासादीनां च प्रवृत्त्या अधि इ य इति स्थितेंतरङ्गत्वात्तुकि स्वांशे चारितार्थ्याभावेन तुग्ग्रहणस्य परिभाषाज्ञापकत्वासंभव इति वाच्यम् । ल्यब्बाधते इति परिभाषया ज्ञापकसाजात्यात् अंतरंगनिमित्तविनाशकल्यप एव प्राबल्यबोधनेन तस्य अत्राप्रवृत्तेर्ज्ञापकस्य सुस्थत्वात् ।

अन्यथाधीत्य प्रेत्येत्यादौ समासोत्तरं ल्यप्प्रवृत्त्या पूर्वं समासे जाते तत्र संहिताया नित्यत्वाद् ल्यब्तुगाप्तिपर्यंतमप्यसंहितयावस्थानासंभवेनैकादेशे ल्यपि तुगपेक्षया पदद्वयसंबन्धिवर्णद्वयापेक्षैकादेशस्य बहिरंगतयासिद्धत्वेन तद्वैयर्थ्यं स्पष्टमेव । पदद्वयसंबन्धिवर्णद्वयापेक्षं बहिरंगमिति प्रेद्ध इत्यादौ गुणो बहिरंग इति ग्रन्थेन न धातुलोपइति सूत्रे संयोगान्तस्य लोप इति सूत्रे च भाष्ये स्पष्टम् । यत्तु षत्वग्रहणमपि ज्ञापकमन्यथा को ऽसिचदित्यादौ पदद्वयसंबन्धिवर्णद्वयापेक्षत्वेन बहिरंगस्यैकादेशस्यासिद्धत्वेन षत्वाप्रवृत्तौ किं तेनेति । तन्न । इणः पूर्वपदसंबन्धित्वेन षत्वस्यापि पदद्वयसंबन्धिवर्णद्वयापेक्षत्वेनोभयोः समत्वात् । एकादेशस्य पशादित्वेनोसि-

---

अत एव निरेष्यदुरेष्येति भाष्यप्रयोगोपपत्तिः । अन्यथा लघूपधगुणात्पूर्वं ल्यपि णेरयादेशे च निरेषय्येत्यादिप्रयोगापत्तिः । अत्रान्तरङ्गनिमित्तविनाशकत्वं च परंपरयापि बोध्यम् । तेन पराजग्ध्येत्यत्र ल्यपस्साक्षात्सवर्णदीर्घनिमित्तविनाशकत्वाभावेपि जग्ध्यादेशप्रवृत्तिद्वारा सवर्णाच्परकत्वरूपनिमित्तविनाशकत्वेन पूर्वं ल्यपि जग्ध्यादेशे तत्सिद्धिरन्यथोक्तरीत्या पूर्वं सवर्णदीर्घे परादिवद्भावेनादशब्दस्योक्तादेशे पराजग्ध्येतिरूपापत्तिरिति दिक् । यत्त्विति । अत एव भाष्ये यदयं षत्वतुकोरसिद्ध इत्याहेत्युक्तमिति तदाशयः । तन्नेति । षत्वग्रहणं समासनिर्दिष्टत्वादुक्तं न तु ज्ञापकमिति भावः । वस्तुतस्तु कोसिचादित्यत्र पूर्वान्तवद्भावेन को इत्यस्य पदत्वे उभयतआश्रयणे इति निषेधेन परादिवद्भावाभावेन ओसिचदित्यस्य पदत्वाभावात्पदादादिरिति पंचमीसमासे सात्पदाद्योरिति निषेधेन षत्वाभावसिद्धेर्नैतत् षत्वग्रहणप्रयोजनं किं

चदित्यस्य पदत्वेन पदादित्वाभावान्न सात्पदाद्योरित्यनेन निषेधः । त्रैपादिके ऽन्तरंगे कार्यकालपक्षे ऽपि बहिरङ्गपरिभाषाया अप्रवृत्तेः पूर्वमुपपादितत्वाच्च ॥ परिभाषार्थस्त्वचोन्यानन्तर्यनिमित्तके ऽन्तरंगे कर्तव्ये जातस्य बहिरंगस्य बहिष्ट्वप्रक्लृप्तिः । बहिष्पदेन बहिरंगम् । तस्य भावो बहिरंगत्वम् । तत्प्रयुक्तासिद्धत्वस्य न प्रक्लृप्तिः न प्राप्तिरिति । असिद्धं बहिरंगमित्युक्त्वा नाजानन्तर्य इति वक्ष्यामीति भाष्योक्त्या तत्रत्यस्यान्तरंग इत्यस्यानुवृत्तिसूचनात् ॥ तेन पचावेदमित्यादौ न दोषः । अन्तरंगस्याच्स्थानिककार्यस्यैत्वस्यान्यानन्तर्यनिमित्तकत्वाभावात् ॥ जातस्य बहिरंगस्येत्युक्त्यायजे इन्द्रं धियतीत्यादौ बहिरंगदीर्घगुणादेरसिद्धत्वं सिद्धम् । अत एवेण्ङशीनामादूगुणः सवर्णदीर्घत्वा-

---

तु अंगुलेरिः अंगुलीस्तस्य संगः अंगुलीसंग इत्यत्र षत्वे कर्तव्ये सवर्णदीर्घस्यासिद्धत्वेन संगस्यांगुलेः परत्वाभावान्न षत्वम् । अंतरंगे बहिरंगे वा यत्र अचोरानंतर्यं तत्रानेन निषेध इति प्राचीनव्याख्यां खण्डयन्नाह । परिभाषार्थस्त्विति । अनुवृत्तिसूचनादिति । अंगरंगपरिभाषाया वाहऊठ्सूत्रदेशस्थत्वेन नाजानंतर्यइति वचनस्य षत्वतुक इति देशस्थत्वेनानुवृत्त्यसंभव इति प्राञ्चः । वस्तुतस्तु अनुवृत्तौ पूर्वपाठस्य निमित्तत्वं न तु पूर्वदेशीयत्वस्य । अत एव कार्यकालपक्षे संज्ञापरिभाषयोर्विधिदेशीयत्वेपि तत्तत्पूर्वपठितसूत्रीयपदानां तत्र तत्रानुवृत्तिः सिध्यति । यद्वा बहिष्ट्वपदार्थस्य नित्यसाकांक्षतयोपस्थितत्वात्ताहशाजानं-

च्छचङन्तस्यान्तरंगलक्षणत्वादित्यादि संगच्छते। अत एवो-माङोश्चेत्याङ्ग्रहणं चरितार्थम् । तद्धि शिव आ इहीति स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्यत्वेना-न्तरंगत्वाद् गुणे वृद्धिबाधनार्थम् ॥ न चाक्षद्यूरि-त्यत्र यणि कृते ऊठो ऽसिद्धत्वाद्वलिलोपापत्तिरिति वा-च्यम् । अचोऽन्यानन्तर्यनिमित्तकेंतरंगे कर्तव्ये कृते च तस्मिन्यदन्तरंगं प्राप्नोति तत्र च कर्तव्ये नासि-द्धत्वमिति तदर्थात्।असिद्धपरिभाषाया अनित्यत्वेन तद्वारणे त्वस्या वैयर्थ्यं तेनैव सिद्धेः॥ अत एव नलोपः सुवि-ति सूत्रे कृति तुग्ग्रहणं चरितार्थम् । अन्यथा वृत्रहभ्या-मित्यादौ बाहिर्भूतभ्याम्निमित्तकपदत्वाश्रयत्वेन बहि-रंगतया नलोपस्यासिद्धत्वेन सिद्धेस्तद्वैयर्थ्यं स्पष्टमेव । मम तु तुक्यजानन्तर्यसत्वान्न दोषः ॥ न चैवं सति ह्रस्वस्य पितीति सूत्रस्थभाष्यविरोधः । तत्र हि ग्राम-णिपुत्र इत्यत्रेको ह्रस्वो ऽङ्य इति ह्रस्वे कृते तुकमाशङ्क्य ह्रस्वस्य बहिरंगासिद्धत्वेन समाहितम्। नाजानन्तर्यइत्यस्य सत्वे तत्र तदप्राप्तेरसंगतिः स्पष्टैवेति वाच्यम् । तेन भाष्येणास्या अनावश्यकत्वबोधनात् । एतज्ज्ञापकेनांत-

---

तर्यनिरूपितस्यैव तस्य ग्रहणेनांतरंगेत्यस्य लाभसंभवात् । अत एवोति । जातबहिरंगस्थले एव निषेधस्वीकारादित्यर्थः । एवमेवोत्तरातएवेत्यस्या-र्थो बोध्यः । नासिद्धत्वमितीति । प्राङ्नये तु वलिलोप इ-

रंगपरिभाषाया अनित्यत्वबोधनस्यैव न्याय्यत्वात् ॥ अत एवाचः परस्मिन्निति सूत्रे भाष्ये पटु ई आ इत्यत्र पयणादेशस्यानया ऽसिद्धत्वात्पूर्वयणादेशः साधितः । अत एवैषा भाष्ये पुनः क्वापि नोल्लिखिता । अत एवान्तरंगपरिभाषामुपक्रम्य विप्रतिषेधसूत्रेस्या बहूनि प्रयोजनानि संति तदर्थमेषा परिभाषा कर्तव्या प्रतिविधेयं च दोषेष्वित्युक्तं संप्रसारणाच्चेति सूत्रे भाष्ये, प्रतिविधानं च परिभाषाविषये ऽनित्यत्वाश्रयणमेवेति ध्वनितमित्यलम् ॥ ५१ ॥

नन्वेवं गोमत्प्रिय इत्यादौ पदद्वयनिमित्तकसमासाश्रितत्वेन बहिरंगं लुकं बाधित्वांतरंगत्वाद्धल्ङ्यादिलोपेनु-

ति निषेधेन तत्सिद्धिः । साधित इति । नचात्र जातस्योति निवेशात् एतदप्राप्तिरिति वाच्यम् । तन्निवेशस्याप्यनित्यत्वमूलकत्वेनादोषात् । पुनः क्वापीति । सिद्धांतिनेति शेषः । यद्वा षत्वतुकोरित्यस्याग्रे पुनः क्वापि नोक्तेत्यर्थः । एतेन विप्रतिषेधसूत्रे पूर्वपक्षिणा भाष्यकृतास्याः कंठतु उक्तत्वेनैतच्चिंत्यमित्यपास्तम् । ध्वनितमिति । तत्र नाजानंतर्यइत्यादिना पृथक्प्रतिविधानमनुक्त्वा तथा कथनात् प्रतिविधेयशब्दस्यैकवचनान्तत्वात् दोषशब्दस्य बहुवचनांतत्वाच्च बहूनां दोषाणां परिभाषाऽनित्यत्वरूपमेकं प्रतिविधानमिति भाष्यकारो मन्यते । किं च नाजानन्तर्यइतिप्रविधानं विप्रतिषेधसूत्रप्रतिपादितं सिद्धान्ती यद्यावश्यकत्वेनाभिप्रैष्यत् तदा तत्र प्रतिविधानमप्युक्तमित्येवावक्ष्यत् । अलमिति । वस्तुतोननुगतानित्यत्वकल्पनापेक्षया वचनारंभ एव साधीयान् । किंचैवं वक्ष्यमाणपरिभाषाणामप्यनावश्यकत्वापत्तिरंतरंगपरिभाषायां अनित्यत्वकल्पनया तत्तज्ज्ञापकोपपत्तेरिति दिक् ॥ ५१ ॥

हल्ङ्यादिलोपे नुमादयः स्युरिति । परत्वान्नित्यत्वाच्च दीर्घं बाधित्वेत्यर्थः । न च पूर्वं नुमि उपधायामचो ऽभावात्सूत्रारंभसामर्थ्येन पूर्वं दीर्घः ए-

व स्यादिति वाच्यम् । उपधाग्रहणस्य तत्र पूर्वमात्रोपलक्षकत्वेन साम-र्थ्याभावात्पूर्वं दीर्घाप्रवृत्तेः । न चैवमपि हल्ङ्यादिलोपं नुमं च तक्र-न्यायेन दीर्घो बाधेतेति सर्वथावतरणासंगतिरिति वाच्यम् । हल्ङ्या-दिलोपविषये तक्रन्यायाप्रवृत्तेर्वक्ष्यमाणत्वादापाद्यमानेर्थे न्यायानादरा-च्चेत्याशयात् । अन्तरंगानपीति । अपिना परादिसंग्रहः । तेन ह्यः श्वः इत्याद्यव्ययेषु हल्ङ्यादिलोपं परमपि बाधित्वाव्ययादाप्सुप इति लुक्सिद्धिरन्यथा हल्ङ्यादिलोपे ऽसन्तत्वाद्दीर्घापत्तिरिति भावः । नन्वेवं त्वं कुलमित्यादौ ङेप्रथमयोरित्यमं बाधित्वा स्वमोरिति लुक् स्यात् भवतादित्यत्र तातङं बाधित्वा हेर्लुक् च स्यात्। तत्कुलमित्यत्र परमप्य-त्वं बाधित्वा स्वमोरिति लुकि त्यदादिभ्यश्चेति वार्तिकासंगतिश्चेति चे-न्न । आद्ये शिशीनुम्लुग्विधीतिवार्तिकारम्भसामर्थ्येनैतदप्रवृत्तेर्युष्मद-स्मदोरलिङ्गत्वेन लुकोप्राप्तेश्च । भवतादित्यत्र त्वस्या ज्ञापकसिद्धत्वे-नासार्वत्रिकत्वादिति शेखरोक्तसमाधानस्य त्वयाप्याश्रयणीयत्वात् । अत्रापिशब्दाभावेपि तातङो ऽनैमित्तिकत्वेनान्तरङ्गत्वाल्लुगापत्तिवारणे गत्यन्तराभावात् । यश्चोभयोः समो दोषः परिहारस्तयोः सम इति न्यायेनापिशब्दानिवेशे दोषदानस्यानुचितत्वाच्च । तत्कुलमित्यत्र प-रिभाषायामापिशब्देन लुको दण्डापूपिकन्यायेन पराद्यन्तरङ्गान्तशास्त्रबा-धकत्वबोधनेप्यपवादशास्त्रबाधकत्वे मानाभावात् उपसञ्जनिष्यमाणन्या-येनातोमित्यस्य विषये लुको ऽप्रवृत्तेर्वार्तिकस्यामादेशबाधनायावश्यकत्वा-त् । के चित्तु भवतादित्यत्र लुको ऽप्रवृत्तये तुह्योरिति सूत्रे तुहि इति पृथक् पदं लुप्तषष्ठ्यन्त, मोसिति पञ्चम्यन्तम् । अश्च उश्चेति स-माहारद्वन्द्वः । अकारोकाराभ्यां परयोस्तुह्योस्तातङिति विशिष्य पुनर्वि-धानसामर्थ्यादतोहेरुतश्चेत्येतयोर्बाधः । तुह्योरिति वाक्येनान्यत्र तात-ङ्सिद्धिरिति वदन्ति । किं च सुपथि वनमित्यत्रान्तर्वर्तिनं समासोत्तर-भवं वा सुप्रत्ययमादाय नात्वादीति बोध्यम् । त्वन्मते तु लुकः प-राद्यबाधकत्वेन परत्वात्प्रतिपदोक्तत्वाच्च लुकः पूर्वमात्वापत्तिर्दुर्वारैव । किं च ब्रह्मिष्ठ इत्यत्र ब्रह्मन् अस् इष्ठ इति स्थिते परत्वात्प्रतिपदोक्त-त्वाद्वा प्राप्तटिलोपं बाधित्वानया विभक्तेर्लुक् । अन्यथा विभक्तेष्टेर्लोप आभीयतया पुनष्टिलोपाप्राप्त्या ऽनः श्रवणापत्तिः । आदित इ-

मादयः स्युरत आह ॥

## अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते ॥ ५२ ॥

अत्र च प्रत्ययोत्तरपदयोश्चेति सूत्रं ज्ञापकम् । त्वत्कृतमित्यादौ लुगपेक्षयांतरंगत्वाद्विभक्तिनिमित्तकेन त्वमावेकवचनइत्यनेन सिद्ध इदं व्यर्थं सत्तज्ज्ञापकम् ॥ ननु तव पुत्रस्त्वत्पुत्र इत्यादौ तवममादिबाधनार्थं तदावश्यकमिति चेत् । एवं तर्ह्यत्रत्यमपर्यंतग्रहणानुवृत्तिस्त-

त्यादावव्ययादिति लुकः पूर्वमत्वसन्तस्येति दीर्घापत्तिर्बोध्येत्यन्यत्र विस्तरः । मपर्यन्तानुवृत्तिरिति । उत्सर्गसमानदेशाइति न्यायेन मपर्यन्तस्यैवादेशे सिद्धे तदनुवृत्तिर्व्यर्था सत्येतज्ज्ञापिकेति भावः । ननु मपर्यन्तानुवृत्त्यभावे सर्वादेशविधानाय सूत्रस्य चरितार्थत्वेन वार्तिककारमते तक्रन्यायासत्त्वेनापवादत्वाभावाद् भाष्यमते तक्रन्यायेनापवादत्वेप्युत्सर्गेतिनियमाभावाज्ज्ञापकासंभवः । अत एव द्वितीयद्विर्वचनेन प्रथमद्विर्वचनबाध इति चेन्न । भाष्यमते यत्रापवादशास्त्रीयस्थानितावच्छेदकमुत्सर्गशास्त्रीयस्थानितायाः साक्षात्परंपरया वावच्छेदकं तत्रोत्सर्गसमानेति नियमस्यावश्य प्रवृत्तेः स्वीकारात्प्रकृते चापवादप्रत्ययोत्तरपदयोरित्येतच्छास्त्रीयस्थानितावच्छेदकस्य युष्मच्छब्दत्वस्योत्सर्गशास्त्रीयस्थानितायाः परंपरयावच्छेदकत्वेनोत्सर्गेतिन्यायेन मपर्यन्तस्यैवादेशसिद्धेस्तदनुवृत्तेर्ज्ञापकत्वस्य सुस्थत्वादिति केचित् । यत्तु मपर्यन्तानुवृत्त्यभावेपि प्रत्ययोत्तरपदयोश्चेत्यस्य द्वन्द्वश्चप्राणीत्यस्य समाहारसिद्धैकत्वानुवादकत्ववद् लाघवात् त्वमावेकवचनइत्येतदनुवादकत्वकल्पनेनास्यापि मपर्यन्तएव प्रवृत्त्या तद्वैयर्थ्येनैतत्परिभाषानुमानमिति । तन्न । द्वन्द्वश्चप्राणीत्यादेः समाहारएकत्वस्य सिद्धत्वेनेतरेतरयोगे ऽपूर्वतद्विधायकत्वकल्पनापेक्षया लाघवात्तदनुवादकत्वकल्पने ऽप्यस्य कास्मिन्नप्यंशे ऽनुवादकत्वासंभवेन त्वदुक्तकल्पनया ज्ञापकत्व-

ज्ज्ञापिकेति भाष्यकृतः ॥ युष्मदादिभ्य आचारक्विप् तु न, संपूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्याङ्ह्रस्वनद्यापइति योजनस्याशक्यत्वात् । अन्ये तूक्तसूत्रे तदनुवृत्तावन्तरङ्गत्वात्त्वादेशे मपर्यन्तासंभवेनैतत्सामर्थ्येनोक्तपरिभाषा कल्प्यतइति वदन्ति । अन्ये तु प्रत्ययइत्यधिकारे कर्तव्ये ऽङ्गस्येत्यधिकारकरणमस्यां ज्ञापकं, तत्फलं पञ्चक्रोष्ट्रीति । अत्र हि पञ्चभिः क्रोष्ट्रीभिः क्रीतमित्यर्थे तद्धितस्त्रीप्रत्यययोर्लुक्यपि प्रत्ययलक्षणेनाङ्गसंज्ञायां स्त्रियां चेति तृज्वत्त्वं भवति । प्रत्ययइत्यधिकारे तु नलुमताङ्गस्येति प्रत्ययलक्षणनिषेधेन प्रत्ययपरत्वाभावात्तृज्वत्त्वानापत्तिः । एतत्परिभाषाभावे तु प्रत्ययइत्यधिकारेप्यन्तरङ्गत्वात्पूर्वमेव तृज्वत्त्वे ऽङ्गस्येत्यस्य वैयर्थ्यं स्पष्टमेवेति वदन्ति । केचित्तु त्वमावेकवचनइतिसूत्रे विभक्तावित्यनुवृत्तिरेतज्ज्ञापिका । तत्फलं तु युष्मःसुन्दरपुत्र इत्यत्रैतदप्रवृत्तिरेव । एतत्परिभाषाऽसत्वे तु विभक्तिपदानुवृत्तेः सत्वासत्वयोरपि त्वमयोर्दुर्वारतया तदसंगतिः स्पष्टैवेति प्राहुः । अन्ये तु त्वमेतिसिद्धे प्रत्ययोत्तरपदयोश्चेत्यस्य वैयर्थ्येन सामर्थ्यात्तवममादिशास्त्रबाधकल्पनापेक्षयान्तरङ्गपरिभाषा ऽप्रवृत्तिबोधकैतत्परिभाषाज्ञापकत्वस्यैवौचित्यमिति वदन्ति । परे तु तवममौङ्स्यलुकीतिन्यासेनालुकीत्यस्य तुभ्यमह्यावित्यत्र संबन्धेन च त्वत्पुत्र इत्यादौ तवममादिव्यावृत्त्या तवपुत्र इत्यादावलुक्समासे व्यासे च तवादिसिद्ध्या प्रत्ययोत्तरेति सूत्रमेवोक्तार्थे ज्ञापकम् । ज्ञापिते त्वस्मिन्वचने त्वदीयस्त्वत्पुत्र इत्यादौ त्वमावेकवचनइत्यस्य विभक्तिपरत्वाभावेनाप्राप्त्या त्वाद्यादेशार्थं सूत्रं तच्चरितार्थमिति प्राहुः । ह्रस्वनद्यापइतिनुड्विधायकसूत्रस्थभाष्येति । तत्र ह्यथास्य कस्मान्न भवतीत्यादिना काम्प्रत्ययादितिविहितस्यामो नुटमाशङ्क्य सानुबन्धकत्वेन समाधायोक्तं, स तर्ह्येवमर्थमनुबन्धः कर्तव्यः । ननु चात्रश्यामित्संज्ञापरित्राणार्थमनुबन्धः कर्तव्यः । नार्थ इत्संज्ञापरित्राणार्थेन । इत्संज्ञाकार्याभावादित्संज्ञा न भविष्यति । इदमस्तीत्कार्यं मिदचोन्त्यात्पर इति । प्रत्ययान्तादयं विधीयते तत्र नास्ति विशेषः । मिदचोन्त्यात्पर इति वा परत्वे प्रत्ययः परश्चेति वेति । अत्र कैयटः, हलन्तेभ्य आचारक्विबन्तेभ्य आम्यस्त्येव वि-

नुड्विधायकसूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारक्विबभावाच्च। एवमेवैकार्थकाभ्यां प्रातिपदिकाभ्यां प्रातिपदिकणिचोऽप्यनभिधानं बोध्यम्। एतेन तत्रादेशार्थं प्रत्ययग्रहणं चरितार्थमित्यपास्तम्॥ ननु मपर्यन्तानुवृत्तिरपि सर्वादेशत्ववारणाय चरितार्था। न चोत्सर्गसमानदेशा अपवादा इति न्यायेनासिद्धवत्सूत्रस्थभाष्यसम्मतेन मपर्यन्तस्यैवादेशे सिद्धे तदनुवृत्तिर्व्यर्थेति वाच्यम्, तस्य श्नमकजादौ व्यभिचारादिति चेत्। न। श्नमि मित्वेन बहुचि पुरस्ताद्ग्रहणेनाकचि प्राक्टेर्ग्रहणेन तस्य बाधेऽप्यत्रोत्सर्गस्य त्यागे मानाभावात्॥ अत एव तस्मिन्नणि चेत्यनेन युष्माकाद्यादेशविधानं चरितार्थं, मन्यथाऽऽकङादेशमेव विदध्यात्। आकङि तव-

---

शेषः। नैतदस्ति। हलन्तेभ्य आचारक्विबभावोऽनभिधानादित्याह। प्रातिपदिकाणिचोप्यनभिधानामिति। वस्तुवस्तु त्वमावेकवचनइति योगविभागसामर्थ्येन प्रत्ययोत्तरपदेतिसूत्रे सिद्धान्तेपि विभक्तावित्यस्यानुवृत्त्यात्र प्रत्ययपरकविभक्त्यभावादेवैतदप्राप्तेर्णिजादेरनाभिधाने न मानम्। असिद्धवत्सूत्रभाष्येति। तत्र हि भाष्ये एधीत्यस्य तत्सूत्रोदाहरणत्वखण्डनावसरे उक्तं, एत्वं लोपापवादो विज्ञास्यते न च सकारस्य लोपः प्राप्नोतीत्युक्तम्। उक्तन्यायानाश्रयणे एत्वस्य लोपस्थान्यकारस्थानिकत्वासंभवेन तदसंगतिरेवेति भावः। अन्यथाकङादेशमेवेति। ननु युष्माकाद्यादेशस्य साकच्कापहारकत्वेन त्रिपथगाकारमते युष्मकच्छब्दादेर्निर्दिश्यमानत्वाभावेन युष्माकाद्यादेशाप्राप्त्याऽऽकङ्पक्षे तस्य साकच्कानपहारकत्वेन तस्य निर्दिश्यमानत्वेनाकङादेशप्राप्त्या साकच्कस्थले फलभेदः। नागेशमतेप्यकज्विशिष्टस्य युष्माकादेशे यौष्माकीण इति आकङादेशे तु यौष्मकाकीण इति फलभेद इति तस्योक्तार्थज्ञापक-

काद्यादेशयोरेतदपवादयोरुक्तन्यायेनांत्यादेशत्वापत्तिरतस्तद्विधानमिदमेव च तज्ज्ञापकम् । यद्यपि विरोधे बाधकत्वमिति वार्तिकमते ऽयं न्यायो भाष्यकारस्तु विनापि

---

वासंगातीरिति चेन्न । आद्यमते यत्र ङित्वाभावे सर्वादेशप्रसक्तिस्तत्रैव ङिच्चेत्यस्य प्रवृत्तेस्तैः स्वीकृतत्वेनाकङो ङकाराभावे आकशब्दस्य साकच्कापहारकत्वसंभावनया युष्मकद्शब्दे निर्दिश्यमानत्वाभावेनात्राकङादेशाप्रसक्त्या फलभेदाभावात् । नागेशमतेऽप्यनाप्यक इत्यादावक इत्यस्य निर्दिश्यमानावयवत्वमुपलक्षणमित्यत्र तात्पर्यग्राहकत्वेनेदकमूशब्दावयवेद्भागस्याकचः प्राङ् निर्दिश्यमानावयवत्वेन प्राप्ततत्तदादेशवारणाय चरितार्थत्वेनाकज्विशिष्टे निर्दिश्यमानत्वाभावेन युष्मकच्छब्दे फलभेदाभावात्। तस्मिन्नणिच मादाक इति न्यासेन युष्मदाद्यवयवमवर्णादवशिष्टयुष्मदाद्यवयवस्याकादेश इत्यर्थकेन साकाचि फलभेदाभावेनेष्टसिद्धेर्युष्माकाद्यादेशस्योक्तार्थज्ञापकत्वे बाधकाभावाच्च । नन्वेवमप्यन्तरङ्गानपीति न्यायसत्वएव युष्माकाद्यादेशानां वैयर्थ्यमन्यथा युवयोरयमित्यर्थे खञि युष्मद् ओस्ईनइति स्थिते ऽन्तरङ्गत्वाद् युवादेशे लुकि आकङि यौवाकीण इति युवद्शब्दस्य युष्माकाद्यादेशे तु यौष्माकीण इति फलभेदात्तज्ज्ञापकत्वमेव न संभवत्ये,वं चान्तरङ्गेति न्यायसत्वएव युष्माकाद्यादेशवैयर्थ्यं तद्वैयर्थ्ये हि उत्सर्गेति न्यायसिद्धिस्तात्सिद्धौ मपर्यन्तानुवृत्तिवैयर्थ्यं तद्वैयर्थ्येन्तरङ्गानिति न्याय इति चक्रकापत्तिरिति चेन्न । घकालतनेति ज्ञापकेन ताद्धितव्यवधायकविभक्तेरलुग्विधानात्प्राक् लुगलुगेतदितरशास्त्रदृष्ट्या ऽविद्यमानवद्भावकल्पनादोसो ऽविद्यमानतया युवाद्यादेशाप्राप्तेश्चक्रकाभावात् । केचित्तु घकालेति ज्ञापकेन तद्धिताधिकारीयकार्ये कर्तव्ये विभक्तेरविद्यमानत्वकल्पनेन युष्मद् ओस् ईनेत्यवस्थायामुभयोः प्राप्त्या तक्रन्यायेन बाध्यसामान्यचिन्तया ऽऽकङादेशेन युवाद्यादेशानां बाधेन चक्रकासंभवादिति प्राहुः । अन्ये तूक्तज्ञापकेन तद्धितनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकरूपावच्छिन्नोद्देश्यताके कार्ये ताद्धितपरत्वेन संभावितविभक्तेरविद्यमानवद्भाव इति कल्पनया प्रकृते तद्धितोद्देश्यतावच्छेदकयुष्मच्छब्दत्वावच्छिन्नोद्देश्यताकयुवादेशे विभक्तेरविद्यमानत्वेन युवादेशा-

विरोधं सत्यपि संभवे बाधकत्वमिच्छतीत्यनाभिहितसूत्रस्थकैयटरीत्या नायं नियमस्तथापि युष्माकाद्यादेशविधानज्ञापित उत्सर्गः स्वीक्रियत एवेति प्रकृते न दोषः । एतद् भाष्यमपि तत्स्वीकारे मानम् ॥ एवं च मपर्यन्तानुवृत्तिस्त्वत्कृतामित्यादौ मपर्यन्तस्यादेशविधानार्था । तत्र चांतरंगत्वात्त्वमावित्येव सिद्धे व्यर्था सैतज्ज्ञापि-

---

प्राप्त्या नोक्तज्ञापकताहानिरिति वदन्ति । विरोधे बाधकत्वमिति । उत्सर्गापवादयोः समानदेशत्व एव बाधकत्वमित्यर्थः । एतेन भाष्यकृन्नयेपि विरोधे एव बाधकत्वेनेदमयुक्तमित्यपास्तम् । वार्तिकमताद् भाष्यमते विशेषमाह । विनापि विरोधमिति । उत्सर्गापवादयोः समानदेशत्वाभावेपीत्यर्थः । अत एव भवेदित्यादावियादेशेन दीर्घबाधासिद्धिः । सत्यपि संभवइति । कृते चारितार्थ्येपीत्यर्थः । अत एव सर्वेषामित्यत्र सुटा नुटो बाधः सिद्ध्यति । नायं नियम इति । उत्सर्गापवादयोः समानदेशत्वमिति नियमो नेत्यर्थः । उत्सर्गः स्वीक्रियतएवेति । प्रायिकोयमुत्सर्गसमानदेशा इत्यर्थोत्रान्तरंगानितिपरिभाषाज्ञापनाय स्वीक्रियते । भवेदित्यादिलक्ष्यसिद्धये परित्यज्यतइति भावः । एतद्भाष्यमिति । अन्तरङ्गानीतिपरिभाषाज्ञापनपरं भाष्यमुत्सर्गेतिवचनस्वीकारे मानमपिशब्दाद् युष्माकाद्यादेशविधानसंग्रहः । उत्सर्गेति न्यायास्वीकारे मपर्यन्तानुवृत्तिज्ञापकतापरोक्तभाष्यासंगतिः स्पष्टैवेति भावः । त्वमावित्येवसिद्धइति । अस्य 'त्वत्पुत्र इत्यादौ तु त्वमाविति बाधित्वा प्राप्तस्य तवममौङ्सीतिसूत्रस्य बाधनाय कृते प्रत्ययोत्तरपदयोश्चेतिसूत्रे त्वपवादत्वादेवोक्तन्यायेन मपर्यन्तस्येत्यर्थस्य सिद्धे' रिति शेषः । अत एव तवादीनामप्राप्त्येत्याद्युत्तरग्रन्थसंगतिः । उत्सर्गेतिन्यायस्वीकारमन्तरैव भाष्योक्तमपर्यन्तानुवृत्तेरुक्तपरिभाषाज्ञापकत्वसंभवे कथमेतद्भाष्यमुत्सर्गेति न्यायस्वीकारे मानम् । अत एव भाष्यउत्सर्गेति न्यायो नोक्त इत्याक्षिपतो हरदत्तस्य मतं खण्डायितुमनुवद-

का । ज्ञापिते त्वस्मिन्नेतद्विषये तवादीनामप्राप्त्या तदपवादत्वाभावेन मपर्यन्तस्यैवादेशार्थं सा चरितार्थेति तदाशयः ॥ यत्तु हरदत्तेनांतरंगप्रवृत्तौ प्रत्यय उत्तरपदे च मपर्यन्तासंभवेन तदनुवृत्तिर्व्यर्था सती ज्ञापिकेत्युक्तं, तन्न । अंतरङ्गाणामप्यपवादबाध्यत्वेन तद्विषये तदप्रवृत्तेः ॥ वस्तुत इदं ज्ञापकं वार्तिकरीत्यैव

---

ति । यत्त्विति । मपर्यन्तासंभवेति । न च मदीय इत्यत्र ममादेशे तत्संभव इति वाच्यम् । तवादेशे तदसंभवेन तदंशे वैयर्थ्यमित्याशयात् । व्यर्थेति । विरुद्धार्थिकाऽसंभवदुक्तिकेत्यर्थः । तथा च सूत्रमेव व्यर्थमिति तद्भावः । ननु युष्माकाद्यादेशस्योत्सर्गेति वचनज्ञापकत्वासंभवः । सिद्धान्तेपि तस्मिन्नणिच तवकममकौ । आकङ्नेकवचने इति न्यासेन सिद्ध्या युष्माकाद्यादेशस्य स्वांशे चारिताथ्याभावात् । तथा चेदृशन्यायालम्बनेन कथं परिभाषाज्ञापकत्वमत आह । वस्तुतस्तु इति । तथा च वार्तिकमते तदर्थस्य स्वारसिकत्वेनोक्तपरिभाषाज्ञापकत्वं युज्यते वक्तुमिति भावः । अयमर्थ इति । अन्तरङ्गानितिपरिभाषारूप इत्यर्थः । केचित्तु वार्तिककृन्नये ऽसंभवएवाप्रवादत्वेन मपर्यन्तानुवृत्तावेव प्रत्ययोत्तरपदयोश्चेत्यस्य वैयर्थ्येनापवादत्वं कल्प्यमुत परिभाषेति विचारणायामपवादत्वं यद्यपि न्यायप्राप्तं तथापि यद्यपवादत्वं स्यात्तदोत्सर्गसमानदेशा इति न्यायेनैव मपर्यन्तस्यादेशे सिद्धे ऽपवादत्वे उपजीव्याया मपर्यन्तानुवृत्तेर्वैयर्थ्यं स्यादित्युपजीव्यविरोधेन परिभाषाज्ञापनस्यैव युक्तत्वम्।परिभाषायां ज्ञापितायां तु विभक्तिलुकि त्वमावेकवचनइत्याद्यप्राप्त्या सर्वादेशबाधनाय मपर्यन्तानुवृत्तिरित्युपजीव्यविरोधाभावः स्पष्ट एव । तदेतन्मनसि निधायाह । वस्तुत इति । इदं ज्ञापकमिति । हरदत्तोक्तं ज्ञापकमित्यर्थः । वार्तिकरीत्येति । भाष्यरीत्या तु मपर्यन्तानुवृत्तिं विनापि तक्रन्यायेनैवापवादत्वं सुघटमित्यपवादत्वे ऽनुपजीव्याया मपर्यन्तानुवृत्तेस्तन्नये उत्सर्गेतिन्यायाभावेन सर्वादेशाभावायावश्यकत्वात् । तदेतदाह । वाचनिक एवायमर्थ इति, इत्येवं ग्रन्थार्थमाहुः ।

भाष्यरीत्या तु वाचनिक एवायमर्थ इत्याहुः ॥ इयं सुपो धात्विति लुग्विषयैवेति के चित् । एङ्ह्रस्वात्संबुद्धेः न यासयोरिति सूत्रस्थाकरप्रामाण्येन लुग्मात्रविषया । आद्ये हे त्रपु इत्यादावनेन न्यायेन लोपं बाधित्वा लुग्भवतीति भाष्ये उक्तम् । अन्त्ये ऽन्तरङ्गांश्च विधीन् सर्वो ऽपि लुग्बाधते न तु सुब्लुगेव । अत एव सनीस्रंस इत्यादौ नलोपो न भवति । पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व इत्यादावेकादेशात्प्रागेव टापो लुक् । अन्यथा कृतैकादेशस्य लुक्यकारश्रवणं न स्यादिति कैयटे उक्तम् । एतद्विरोधात्तद्राजस्येति सूत्रे कैयटेनोक्तमंगानतिक्रान्तो ऽत्यंग इत्यत्र सुपो लुकि बहुवचनपरत्वाभावात्तद्राजस्येति लुग्न स्यादिति श-

---

आकरेति । भाष्यकैयटेत्यर्थः । अनेन लोपं बाधित्वेति । न च लुकः प्रतिपदोक्तत्वेनैतन्न्यायानवसर इति वाच्यम् । एतत्फलस्यान्यथासिद्धत्वेप्यत्रोक्तन्यायप्रवृत्तिस्वीकारे बाधकाभावेन भाष्याविरोधस्य दुष्परिहरत्वात् । अपिशब्दघटितपाठे एतद् भाष्यमपि मानम् । अपिनात्र लाक्षणिकस्य संग्रहः । लुङ् न स्यादिति । तद्राजसूत्रे बहुष्वित्यस्य बहुवचने परे इत्यर्थः । अति अङ्ग अस् अस् इत्यवस्थायां सामासिकशसो लुकि नलुमतेतिनिषेधात्प्रत्ययलक्षणाभावेन बहुवचनपरत्वाभाव इति शङ्काशयः । के चित्त्वाशङ्क्येत्यस्याग्रे लुगपेक्षयेत्यादिं वक्तुंयुक्तमित्यन्तं ग्रन्थं संयोज्य 'परं तदनुक्त्वा यदि' ति शेषमपूर्य सुब्लुक इति योजयन्ति । तथा च इत्याशङ्क्य लुगपेक्षया लुको बलवत्त्वस्य वक्तुमशक्यत्वादिति तदा शङ्कासमाधानं वक्तुं युक्तं परं

ङ्गापरभाष्यव्याख्यावसरे अन्तरंगानपीति न्यायेनायं लुक् सुब्लुको बाधकः स्यादित्याशङ्क्य सुब्लुक एवानेन बलवत्त्वं बोध्यत इति तत्प्रौढयेति द्रष्टव्यम् । लुगपेक्षया लुको बलवत्वस्य वक्तुमशक्यत्वादिति तदा शंकासमाधानं वक्तुं युक्तम् ॥ अनेन न्यायेनान्तरङ्गनिमित्तविनाशकलुकस्तत्प्रयोजकसमासादीनां च प्राबल्यं बोध्यत इत्यन्यत्र विस्तरः ॥ ५२ ॥

---

तदनुक्त्वा यद् सुब्लुक एवानेन बलवत्त्वं बोध्यतइत्युक्तं तत्प्रौढयेति द्रष्टव्यमिति योजना । तत्र बीजमाह । अनेनेति । तथा चात्र सुब्लुक एवान्तरङ्गनिमित्तविनाशकत्वेन प्राबल्यं, न तु तद्राजलुकस्तस्यान्तरङ्गनिमित्तविनाशकत्वाभावादिति ग्रन्थरहस्यमाहुः । एतत्फलमूर्णुहीति । उतश्चेति लुकोन्तरङ्गगुणनिमित्तविनाशकत्वाभावेन बलवत्वाभावादन्तरङ्गत्वाल्लघूपधगुणे संयोगपूर्वकोकारात्परत्वेन न हेर्लुक् । तथा सर्वस्तोमादिबहुव्रीहौ सर्वस्य सुपीत्यादयुदात्तं बाधित्वा सामासिकलुकि सर्वशब्दस्योञ्छादित्वादन्तोदात्ते बहुव्रीहौ प्रकृत्येत्यन्तोदात्तपूर्वपदकत्वापत्तिर्न।किं तु सौवरीणां सप्तमीनां तदन्तसप्तमीत्वेन कृतेपि सामासिकलुकि सर्वस्य सुपीत्यस्य प्रवृत्तिसंभवेन तस्यान्तरङ्गनिमित्तविनाशकत्वाभावेन पूर्वमप्रवृत्त्या सर्वस्य सुपीत्याद्युदात्ते कृते बहुव्रीहाविति प्रकृतिस्वरे आद्युदात्तपूर्वपदकत्वमेव सिद्ध्यति । तत्प्रयोजकसमासेति । आदिना प्रातिपदिकसंज्ञादिसंग्रहः । अत एव राजपुत्रीत्यत्र लुकः समासस्यान्तरङ्गनिमित्तविनाशकत्वाभावेन पुत्रशब्दान्ङीनि नित्वादाद्युदात्ते कृते ततः समासे समासस्येत्यन्तोदात्तत्वं सिद्ध्यति । अन्यथा पूर्वं समासे ङीनि नित्स्वरसमासस्वरयोः प्राप्तावन्तरङ्गत्वात्समासस्वरं बाधित्वा नित्स्वरे ऽनिष्टस्वरापत्तिरिति दिक् ॥ ५२ ॥

नन्वेवं सौमेन्द्रे ऽन्तरंगत्वादाद्गुणे पूर्वपदात्परेन्द्रश-ब्दाभावेन नेन्द्रस्य परस्येति वृद्धिनिषेधो व्यर्थः । अ-न्तादिवद्भावस्तूभयत आश्रयणे निषिद्धः । किं च वृद्धिरप्यत्र न प्राप्नोत्यन्तादिवत्वोभयाभावे ऽपि पूर्वा-न्तवत्वेनैकादेशविशिष्टे पूर्वपदत्वेनेन्द्रशब्दस्यैकदेशवि-कृतन्यायेनोभयत आश्रयणे नान्तादिवदित्यस्याभावेन तदाश्रयणे चोत्तरपदत्वेऽपि तस्यानच्कत्वादेकस्यैकादेशेन परस्य नित्येन यस्येति लोपेनापहारात् । न च परादिवद्भा-वेनैकादेशविशिष्टस्योत्तरपदत्वमेवास्त्विति तत्सम्भव इति वाच्यम् । उत्तरपदाद्यच्स्थानिकत्वाद् वृद्धेस्तदभावेनाप्रा-प्तेस्ताद्रूप्यानतिदेशात् । अन्यथा खट्वाभिरित्यादावपि पूर्वान्तवत्वेनादन्तत्वे भिस ऐसापत्तिरिति भाष्ये स्पष्ट-

---

अंतादिवत्त्वोभयाभावेपीति । केचित्तु अपिस्त्वर्थे । तथा चांतादिव-त्वोभयाभावे तूभयत आश्रयणे नान्तादिवदितिनिषेधाभावेन पूर्वांतवत्वेनै-कादेशविशिष्टे पूर्वपदत्वेन एकदेशविकृतन्यायेन तदाश्रयणेन उत्तरपदत्वाति-देशेन न्द्रशब्दस्य चोत्तरपदत्वेपि तस्यानच्कत्वात् वृद्धिरप्यत्र न प्रा-प्नोतीत्येतदन्वयमाहुः । अन्ये तूभयत आश्रयणे नांतादिवदित्यस्य निषेधस्याभावेन वस्तुतोस्वीकारेणेत्यर्थः । प्रकारांतरमाह । तदाश्रयणे-न वेति । उभयत आश्रयणे इति वचनस्याश्रयणेन वा अंतादिवत्वोभया-भावेपि अन्तादिवत्वोभयस्यातिदेशाभावेपीत्यर्थः । ततो यथाश्रुतम-न्वयमाहुः । वस्तुतस्तूभयतआश्रयणे नान्तादिवदित्यस्याभावेन तदा-श्रयणेन वेत्यन्तग्रन्थोत्र प्रक्षिप्तो बोध्यः । ताद्रूप्यानतिदेशादिति । ननु क्षीरपेणेत्यत्रैकाजुत्तरपदत्वस्यातिदेशाय स्ववृत्तित्वस्वस्थानिकादेशावृत्तित्वो-

म्. अत एव पूर्वेषुकामशम इत्यादावन्तरंगत्वाद् गुणे वृद्धिर्न स्यादित्याशङ्कितम्।तदेकदेशमात्रस्य विकाराभावाच्च ॥त-

भयसंबन्धेनांन्तादिवर्णविशिष्टस्यैवाल्मात्रवृत्तिधर्मस्य ताद्रूप्यपदेन ग्राह्यतया सोमेन्द्रेतिदिष्टव्यस्याच्त्वरूपस्याल्मात्रवृत्तिधर्मस्य स्वस्थानिकैकाररूपादेश-वृत्तित्वेन तत्त्वाभावान्निषेधाप्रवृत्तिः । किं च एन्द्रघटक एकारे अ-च्त्वस्य सिद्धतया उत्तरपदत्वस्यातिदेष्टव्यस्य च निषेधाविषयत्वेनोक्त-समाधेरसंभवश्चेति चेन्न । अन्तादिवच्चेत्यनेन शास्त्रीयधर्मस्यैवातिदेशेनो-त्तरपदत्वमात्रधर्मस्याशास्त्रीयत्वेनातिदेशासंभवात्। ताद्रूप्यपरिष्कारे नि-रुक्तसंबन्धद्वयेन स्वविशिष्टाल्मात्रवृत्तिधर्मस्य विशेषणदलप्रविष्टयावत्प-दार्थसंकुचितस्यैव ग्रहणादच्त्वस्योक्तताद्रूप्याभावेप्युत्तरपदादित्वरूपविशे-षणदलप्रविष्टधर्मेण संकुचितस्य तादृशस्योत्तरपदाद्यच्त्वस्य स्वस्थानिका-देशावृत्तित्वेन स्ववृत्तित्वेन चोक्तरूपतया नवा ताद्रूप्यादिति निषेध-विषयत्त्वस्य सुवचत्वात् । उत्तरपदाद्यच्त्वस्याच्त्वरूपशास्त्रीयधर्मघ-टितत्त्वेन शास्त्रीयत्त्वाक्षतेः । अत एव प्रपठ्येत्यत्र वल्त्वरूपशास्त्रीय-धर्मघटितत्त्वेन वलादित्वस्य शास्त्रीयतया स्थानिवत्त्वेनातिदेशमाशङ्क्य विशेषणतया अल्लाश्रयणादनल्विधाविति निषेध इत्युक्तमाकरे । अत एवे-ति । ताद्रूप्यस्यानतिदेशादेवेत्यर्थः । पूर्वेषुकामशमीति । पूर्वा चासा-विषुकामशमी च तस्यां भव इत्यर्थेणि प्राचां ग्रामनगराणामिति वृद्धेर्बहि-रंगतयान्तरंगत्वादाद् गुणे उत्तरपदाद्यच्त्वाभावाद् वृद्धिर्न स्यादिति भा-वः । ननु एंद्रशब्दस्यैकदेशविकृतन्यायेनोत्तरपदत्त्वं तेनैव सोमितिमांते सोमे इत्येकारांते वा पूर्वपदत्वं चास्तु तावता च न पूर्वोक्तदोषावकाश इति शंकां मनसि निधायाह । तदेकदेशेति । अस्य न्यायस्य लौकिक-त्वेन लोके तत्रैव प्रवृत्तिदर्शनेनात्र तद्विषयाभावात् । ग्रन्थरहस्यविद-स्तु-किं च वृद्धिरप्यत्र न प्राप्नोति अंतादिवत्त्वोभयाभावेपीत्यन्तमेकं वाक्यम् अत्रापिश्चार्थे । यथोभयत आश्रयणेन्तादिवद्भावनिषेधाद् वृद्धिनिषेधो न प्राप्नोति एवम् अन्तवत्वादिवत्त्वोभयस्यातिदेशाभावे वृद्धिरपि न प्राप्नो-तीत्यस्यार्थः । वृद्धिप्राप्तिं प्रकारद्वयेनोद्भावयति । पूर्वान्तवत्त्वेनेति । पूर्वान्तवत्वेनैकादेशविशिष्टे सोमे शब्दे पूर्वपदत्वे न्द्रशब्दस्यैकदेशविकृ-

दुक्तं भाष्ये इन्द्रे द्वावचावेको यस्येति लोपेनापहृतो पर एकादेशेन ततो ऽनच्क इन्द्रशब्दः संपन्नस्तत्र कः प्रसंगो वृद्धेरिति ॥ मरुदादिभिरिन्द्रस्य द्वन्द्वे इन्द्रस्यैव पूर्वनिपातो ऽत आह ॥

## पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गो ऽप्येकादेशो न ८३

अत्र च नेन्द्रस्येति निषेध एव ज्ञापक इत्यन्तादि-

---

तन्यायेन उत्तरपदत्वे उभयतआश्रयेतिनिषेधाभावेपि वृद्धिर्न प्राप्नोतीति संबन्धः । द्वितीयं वृद्धिप्राप्तिप्रकारमाह । तदाश्रयणेनेति । तदाश्रयणेन एकदेशविकृतन्यायाश्रयणेन एकादेशविशिष्टे सोमेशब्दे पूर्वपदत्वे ऐंद्रशब्दे उत्तरपदत्वे उभयतआश्रयणे नांतादिवदित्यस्याभावेपि वृद्धिर्न प्राप्नोतीति संबंधः । आद्यस्योत्तरमाह । तस्यानच्कत्वादिति । द्वितीयस्योत्तरमाह । तदेकदेशमात्रस्येति । पूर्वकल्पेषु एतद्विषयकशंकामकृत्वैवं समादधानस्य ग्रन्थकर्तुः शून्यहृदयत्वमापद्येतेत्याहुः । मरुदादिभिरिति । न च विष्ण्वादिशब्दैरिन्द्रशब्दस्य समासे निषेधस्य चारितार्थ्यम् । न चाभ्यर्हितं चेत्यपेक्षयाजाद्यदंतमित्यस्य प्राबल्यमिति वाच्यम् । तथा सति वासुदेवार्जुनाभ्यां वुञिति सौत्रनिर्देशानुपपत्तेरिति वाच्यम् । ज्ञापकपरोक्तभाष्यप्रामाण्येन प्रसिद्धसाहचर्यकदेवताद्वन्द्वे एव विधिनिषेधयोः प्रवृत्तिकल्पनेनादोषात् । विष्णोरिन्द्रावरजत्वेनेन्द्रस्यैवाभ्यर्हितत्वाच्च । सोमस्य तु अमृतरूपाप्रदातृत्वेन पितृसमत्वात् महाप्रलयपर्यन्तस्थायित्वात् शिवशिरोधृतत्वाच्चाभ्यर्हितत्वेन पूर्वनिपातः । पूर्वोत्तरपदानिमित्तकार्यादिति । अत्र पूर्वोत्तरपदयोर्निमित्तता च पूर्वपदत्वेनोत्तरपदत्वेनेति नाग्रहः। अत एव परमा-

वच्च विप्रतिषेधे परमिति सूत्रयोर्भाष्ये स्पष्टम् ॥ ५३ ॥

नन्वेवमपि प्रधाय प्रस्थायेत्यादावन्तरंगत्वाद्धित्वादिषु कृतेषु ल्यप्स्यादत आह ॥

## अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते ॥ ५४ ॥

अदोजग्धिरिति सूत्रे ति कितीत्येव सिद्धे ल्यब्ग्रहणमस्या ज्ञापकमित्यदो जग्धिरित्यत्र भाष्ये स्पष्टम् ॥ ५४ ॥

नन्वेवमपीयायेत्यादौ द्वित्वे कृते ऽन्तरंगत्वात्सवर्ण-

---

हमित्यादौ सवर्णदीर्घात्पूर्वमनया परिभाषया मपर्यन्तस्यादेशसमर्थनपरमदसऔसुलोपश्चेति सूत्रस्थं भाष्यं संगच्छते । अन्यथा स्वाहैसावित्यादौ पूर्वोत्तरपदत्वयोरनिमित्तत्वेन तदसंगतिरेव स्यादिति बोध्यम् । एकादेशो नेति । अयं संधिकार्यस्योपलक्षणं तेन रात्रिमट इत्यादौ रात्रेः कृतीति मुमः पूर्वमन्तरंगो यणादेशो नेति सिद्धम् ॥ ५३ ॥

ल्यब्ग्रहणमस्या ज्ञापकमिति । ननु ल्यब्ग्रहणेन प्रकृतिप्रत्ययोभयमात्रनिमित्तकान्तरंगकार्याणां ल्यब्विषये अप्रवृत्तिरित्येव ज्ञाप्यतां नल्यपीतिसूत्रं च न कार्यमिति चेन्न । अधीत्येत्यादौ तुगादेरप्यप्रवृत्तिप्रसंगात् । त्क्वाश्रयानुबन्धकार्याणां ल्यब्विषये प्रवृत्यभावस्तूक्तज्ञापकेन कल्पयितुमशक्यः । प्रलूयेत्यादौ गुणानिषेधानापत्तेः प्रोह्य गत इत्यत्र संप्रसारणस्य प्रमथ्येत्यादौ नलोपादेश्चानापत्तेरित्यन्यत्र विस्तरः ॥ ५४ ॥

सवर्णदीर्घत्वेइति । ननु द्वित्वस्यापि बहिरङ्गत्वेनासिद्धत्वाद्दीर्घाप्राप्तिः । न च नाजानन्तर्यइति निषेधः, तस्याअसत्वादिति चेन्न । तदस-

दीर्घत्वे तदसिद्धिरत आह ॥

## वार्णादाङ्गं बलीयो भवति ५५

तेनान्तरंगमपि सर्वणदीर्घं बाधित्वा वृद्धिरिति तत्सिद्धिः ॥ अभ्यासस्यासवर्णे इतीयङ्विधायकसूत्रस्थमसवर्णग्रहणमस्या ज्ञापकम् । तद्धीषतुरित्यादावियङादिन्यावृत्त्यर्थम् । एतत्परिभाषाभावे त्वीषतुरित्यादावन्तरंगेण सवर्णदीर्घेण बाधात्तद्व्यर्थम् । इयङुवङौ ह्यभ्याससंबन्धनिमित्तकत्वाद् बहिरंगौ । न चेयङादिरपवादो, येननाप्राप्तिन्यायेनेयर्तीत्यादिसकललक्ष्यप्राप्तयणपवादत्वस्यैव निर्णयादिति प्राञ्चः ॥

---

त्वेपि तद्विषये बहिरङ्गपरिभाषायाः प्रमाणसत्वएव प्रवृत्त्यात्र प्रवृत्तौ प्रमाणाभावात् । अत एवोखतुरित्यत्र दीर्घसिद्धिः । प्रकृतपरिभाषाज्ञापनपरभाष्यं च संगच्छते । अभ्याससंबन्धनिमित्तकत्वादिति । द्वित्वप्रयोज्यसंज्ञावन्निमित्तककार्यविधायके द्वित्वप्रयोजकइत्यस्याध्याहारादित्यर्थः । अत्र च ह्वः संप्रसारणमिति सूत्रमेव मानम् । अन्यथा ऽजूहवदित्यत्राभ्यस्तस्यचेत्यनेनैव संप्रसारणसिद्धौ तद्वैयर्थ्यापत्तिः । मम त्वभ्यस्तस्य चेत्यत्र द्वित्वप्रयोजक इत्यस्य सत्वेनाजूहवदित्यत्र णिचा व्यवधानात्तदप्राप्त्या ह्वः संप्रसारणमित्यस्य सार्थक्यं स्पष्टमेव। अत एव प्रजिह्वायकीयिषतीत्यत्राभ्यस्तस्य चेति संप्रसारणं न । अत एव चोरादित्यत्र प्रत्ययइत्यस्याध्याहाराद्वृश्चेत्यस्य सिद्धिरिति मूलएव स्पष्टम् । सकललक्ष्यप्राप्तेति । न च तक्रन्यायेन इत्वेन यणो बाधादित्वोत्तरं यणप्राप्त्या कथं तस्य सकललक्ष्यप्राप्तत्वमिति वाच्यम् । अभ्यासविकारेषु बाध्यानां पूर्वं प्रवृत्तेरित्वं बाधित्वोरदत्वे हलादिः शेषे इत्वे च यणप्राप्त्या

परे त्वेतत्परिभाषाभावे ऽभ्यासस्येति सूत्रमेव व्यर्थम् । न चेयायियेषेत्यादौ चरितार्थम् । तयोरपि पूर्वप्रवृत्तगुणस्य पूर्वप्रवृत्तवृद्धेश्च द्विर्वचनेचीति रूपातिदेशेनापहारे द्वित्वे कृते पुनः प्राप्ते गुणवृद्धी बाधित्वान्तरंगत्वात्सवर्णदीर्घापत्तेः । न चेयर्तीत्यादौ तच्चरितार्थम् । तावन्मात्रप्रयोजनकत्व उरित्येव ब्रूयात । य्वोरित्यनुवर्तते । इणो यणिति साहचर्याद्व्याख्यानाच्च ऋधातोरेव ग्रहणम् । अर्तेरिवर्णस्येयाङित्यर्थः । अभ्यासस्यार्ताविति अभ्यासस्यार्तेरिति वा गुरुत्वान्न युक्तम् ॥ न च ए ऐ ओ औशब्देभ्य आचारक्विबन्तेभ्यो लिटीयङाद्यर्थं तत्सूत्रमावश्यकं, तथा ओणुधातोर्ण्वुलन्तादिच्छाक्यजन्तात्सन्युवोणकी-

---

इत्वस्य यणपवादत्वासंभवेन सकललक्ष्यमाप्तत्वस्य सूपपादत्वात् । नन्वेवं सति ऋ ऋ ति इत्यवस्थायां सार्वधातुकेति गुणं बाधित्वा लघूपधगुणः प्राप्तस्तं बाधित्वान्तरङ्गत्वाद्यण् प्राप्तस्तं च बाधित्वापवादत्वाद्दीर्घः प्राप्तस्तं बाधित्वेत्वं प्राप्तं तच्चाभ्यासविकारइत्यनेन बाधित्वोरदत्वं प्राप्तं तद् बाधित्वा ह्रस्वः प्राप्तस्तं च बाधित्वा पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वात्सार्वधातुकेति गुणः प्राप्त इति चक्रकापत्तिरिति चेन्न । पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वाद् द्वित्वादेः पूर्वमेव सार्वेतिगुणप्राप्त्या चक्रकासंभवात् । के चित्त्वभ्यासविकारइत्यस्योभयोरभ्यासत्वावच्छिन्नोद्देश्यताकत्वे एव प्रवृत्त्या तस्यात्र प्रवृत्त्यभावेनोक्तरीत्या चक्रकासंभव इति वदन्ति । नन्वेवमिकारांशे यणः सकललक्ष्यप्राप्तत्वेप्युकारांशे तत्त्वाभावाद्रुरुवतुरित्यादावपवादत्वात्सवर्णदीर्घं बाधित्वा प्राप्तस्येयङो वारणायासवर्णग्रहणस्य चारितार्थ्यमिति वाच्यम् । उकारांशमात्रफलकत्वे अनावित्येव वक्तव्ये ऽसवर्णग्रहणस्योक्तार्थज्ञापकत्वे बाधकाभावात् । उरित्येव ब्रूया-

यिषतीत्याद्यर्थमावश्यकमिति वाच्यम् । षाष्ठप्रथमाह्निकान्तस्थभाष्यप्रामाण्येन तेषामनभिधानात् । अन्त्ये द्वितीयद्विर्वचनस्यैव सत्वेन त्वदुक्तप्रयोगस्यैव दुर्लभत्वात् । एवं च संपूर्णसूत्रस्य ज्ञापकता युक्ता ॥ यद्यपि भाष्ये यदयमभ्यासस्यासवर्ण इत्यसवर्णग्रहणं करोतीति ग्रन्थेनासवर्णग्रहणस्यैव ज्ञापकता लभ्यते तथापि न ह्यन्तरेण गुणवृद्धी असवर्णपराभ्यासो भवतीति

---

दिति । न च इधातोर्लिटि थलि द्विर्वचनाद् गुणवृद्धी भवतो विप्रतिषेधेनेति वार्तिकादिप्रामाण्येन गुणोत्तरं द्वित्वे ऽभ्यासऱ्हस्वे इएथेत्यत्राभ्यासेकारस्य स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावेन स्थानिवद्भावाप्राप्त्या ऽसवर्णाच्परकत्वेनेयङर्थमुक्तसूत्रस्य चारितार्थ्यमिति वाच्यम् । ए एथेत्यवस्थायां ऱ्हस्वं बाधित्वान्तरङ्गत्वेनायादेशस्यैव प्रवृत्यात्र चारितार्थ्यस्य दुरुपपादत्वात् । षाष्ठेति । दाश्वानिति सूत्रस्थेत्यर्थः । तत्र हि मूलोक्तरीत्या वार्णपरिभाषाया अभ्यासस्येत्यस्य ज्ञापकत्वोपपादनावसरे ऽत्यर्थमेतत्स्यादित्यनेन ऋधातावेव चारितार्थ्यमुक्तं न तु एऐशब्दादिषु । तेन तेषामनभिधानमित्यर्थः । वदव्रजेतिसूत्रस्यभाष्यप्रामाण्यादप्येषामनभिधानं बोध्यम् । तत्र ह्मतोल्लान्तस्येतिसूत्रादद्ग्रहणमनुवर्त्य वदव्रज्योरकारस्याचश्च वृद्धिरित्येव सिद्धे हल्ग्रहणं जातिग्रहणार्थं तेनाराक्षीदित्यादिसिद्धिरित्युक्त्वा तत्राजन्तस्येत्यर्थवारणाय हल्ग्रहणमित्याशङ्क्यादन्ते लोपेन दीर्घान्ते फलाभावेनेगन्ते सिचिवृद्धिरित्यनेन सिद्धत्वेन सन्ध्यक्षरान्तस्य धातोरभावेन च फलाभावादजन्तस्येति नार्थ इत्युक्तम् । अन्यथा ए ऐ इत्यादिभ्य आचारक्विपि तत्र फलसत्वेन भाष्यासंगत्यापत्तेः । वस्तुतस्तु नव्यमते सन्ध्यक्षरेभ्यो लिटि कास्प्रत्ययादित्यामः प्रवृत्या द्वित्वाप्राप्तेर्ऱ्हस्वात्पूर्वमन्तरंगत्वादयादेशादेः प्रवृत्तेश्च नात्र सूत्रस्य चारितार्थ्यमित्यन्यत्र वि-

तदुपपादनग्रन्थेन संपूर्णसूत्रस्यैव ज्ञापकता लभ्यते । अग्रे ऽपि नैतदस्ति ज्ञापकमर्त्यर्थमेतत्स्यादित्यनेन सूत्रसार्थक्यमेव दर्शितमसवर्णग्रहणस्यैव ज्ञापकत्वे तु तद्व्यावर्त्यप्रदर्शनेन तत्सार्थक्यमेव दर्शितं स्यात्॥न चाकृतव्यूहपरिभाषयेयेषेत्यादौ सवर्णदीर्घप्राप्तिर्यदि दीर्घो न स्यात्तर्हि गुणः स्यादिति संभावनायाः सत्वेन परिभाषाप्रवृत्तेः सूपपादत्वादिति कथं संपूर्णसूत्रस्य ज्ञापकतेति वाच्यम् । तस्या असत्वात् । सत्वे वैतद्भाष्यप्रामाण्येन यत्रान्तरङ्गकार्यप्रवृत्तियोग्यकालोत्तरमेव त-

---

स्तरः । द्वितीयद्विर्वचनस्यैवेति । यथेष्टं नामधातुष्वित्यनेनापि अनजादेरेव प्रथमस्य द्वितीयस्य तृतीयस्यैकाचो द्वित्वेनोक्तरूपे णक्शब्दादेरेव द्वित्वप्राप्त्योक्तदूषणासंभव इति भावः । एतेन मनस ओणको मनओणकस्तस्मात्क्यजन्तात्सनि नमउवोणकीयिषति, एवमेधीत्यस्य द्वित्वे ह्रस्वप्रकृतिभावे ततो रूपपि एधिएधिरुपेति जाते तस्मात्क्विबन्तात्सनि एधशब्दस्य द्वित्वे इयेधि एधि रूपिषतीत्यादौ इयङाद्यर्थं सूत्रं चरितार्थमित्यपास्तम् । इयेषेति । ननु यदि गुणो नस्यात्तर्हि दीर्घः स्यात्ततश्च लघूपधत्वाभावाद् गुणो न स्यादिति संभावनायाः सत्वेनाकृतव्यूहपरिभाषया गुणस्याप्यप्राप्त्या सवर्णाच्परकत्वेनोक्तसूत्रस्य चारिताथ्र्यासंभव इत्यत आह । आदाविति । तेनेयायेत्यत्र यदि गुणादिर्न स्यात्तर्हि दीर्घःस्यात्तर्ह्यपीगन्तत्वादेः सत्वाद् गुणादिः स्यादिति संभावनायाः सत्वेनाकृतेतिपरिभाषया गुणादिविषये प्रवृत्त्यभावेपि पूर्वरीत्या दीर्घस्य तया वारणेन गुणादौ कृते सूत्रं चरितार्थमिति भावः । वस्तुतस्तु गुणस्यान्तरङ्गत्वाभावेन यदि गुणो न स्यात्तदा दीर्घः स्यादिति संभावनाया अकृतेतिपरिभाषाप्रवृत्तिप्रयोजकत्वाभावात् । अन्तरङ्गशास्त्रप्रवृत्त्यभावसं-

न्निमित्तविनाशकबहिरंगविधेः प्राप्तिस्तत्रैव तत्परिभाषाप्रवृत्तिस्वीकाराच्च ॥ न चान्तरंगत्वाद्दीर्घेपीयायेत्यादौ पूर्वान्तवत्त्वेनाभ्यासत्वादिवर्णत्वाच्च णल्यसवर्ण इयङ्विधानेन सूत्रं चारितार्थम् । न चाचिश्न्वित्यनेन सिद्धिः, वृद्धिबाधनार्थत्वादिति वाच्यम् । प्रत्यासत्त्याऽसवर्णपदेनाभ्यासोत्तरखण्डसंबन्ध्यसवर्णाच एव ग्रहणाच्छास्त्रबाधकल्पनापेक्षया परिभाषाज्ञापकत्वस्यैवौचित्याच्चेत्याहुः ॥

सा चेयं धर्मिग्राहकमानादाङ्गवार्णयोः समानकार्यि-

---

भावनाप्रयोज्याया बहिरंगेणान्तरंगमिनित्तविनाशसंभावनाया एव तत्प्रवृत्तिप्रयोजकत्वादियेषेत्यत्रापि दोषदानमुचितम् । प्रत्यासत्त्येति । द्वित्वशास्त्रीयविधेयताश्रयावधिकपूर्वस्याभ्यासत्वेनासवर्णाच्पदेनापि तादृशविधेयताश्रयघटकस्याच एव ग्रहणौचित्यादिति भावः । नन्वेतादृशप्रत्यासत्त्याश्रयणेन सूत्रवैयर्थ्योपपादनमयुक्तमित्यत आह । शास्त्रबाधेति । समानकार्यित्वेति । समानस्थानिकत्वे एवैषा प्रवर्तते न तु समानोद्देश्यत्वे समाननिमित्तकत्वे वेत्यर्थः । समानोद्देश्यत्वे एतत्प्रवृत्तिस्वीकारे तु चच्छावित्यत्र छा छा अ इति स्थितेऽन्तरङ्गत्वात्तुकि ह्रस्वो न प्राप्नोतीत्याशङ्क्याभ्यासविकारे वैयधिकरण्यान्वयेन समाधनपरभाष्यासंगत्यापत्तेः । तव मते तुग्ह्रस्वत्वयोः समानोद्देश्यत्वेन वार्णपरिभाषया पूर्वमेव ह्रस्वत्वे वैयधिकरण्येन ह्रस्वविधानं भाष्योक्तमसंगतमेव स्यात् । उछधातोर्लिटि तिपि शपि उछ् अतीतिस्थिते तुग्गुणयोः समाननिमित्तकत्वेन वार्णपरिभाषया पूर्वं गुणे उच्छतीतिरूपानापत्तिः । एवं गा अ आन इति स्थिते मुग्दीर्घयोः समानोद्देश्यत्वेन वार्णपरिभाषया पूर्वं मुकि गामान इति, गाधातोरदादित्वे तु गान इति रूपयोर्विलक्षणत्वेन "गाधातुरादादिकः फले तु न भेद" इति मूलग्रन्थासंगतिश्च स्यादिति बोध्यम् । समाननिमित्तत्वे एतत्प्रवृत्तिस्वीकारे दूषणमा-

त्व एव। यत्तु समाननिमित्तकत्वरूपसमानाश्रयत्व एवैषेति तन्न।ज्ञापिते ऽपीयायेयेषेत्याद्यसिद्धेः सूत्रवैयर्थ्यस्य तदवस्थत्वाच्च। स्योन इत्यत्र तु वक्ष्यमाणरीत्यास्या अनित्यत्वादप्रवृत्तौ गुणादन्तरङ्गत्वाद्यणादेशः॥ न चैवमपीयायेत्यादावियङ् दुर्लभस्तत्र कर्तव्ये वृद्ध्यादेः स्था-

---

ह। ज्ञापितेपीति। केचित्तु वार्णशास्त्रीयेन सप्तम्यन्तेन पञ्चम्यन्तेन वा या व्यक्तिर्गृह्यते सा ऽऽङ्गशास्त्रीयेन केन चित्पदेन स्वप्रयोजकोपस्थितीयमुख्यविशेष्यतया गृह्यते तदा वार्णादाङ्गमित्यस्य विषयः। इयायेत्यत्र दीर्घरूपवार्णशास्त्रीयेणाचीतिसप्तम्यन्तपदेनानभ्यासेकाररूपव्यक्तिर्गृह्यते सैवाचोञ्णितीतिशास्त्रीयनिर्दिश्यमानपदेनोपस्थितीयमुख्यविशेष्यतया गृह्यत इति तयोः समाननिमित्तकत्वम्। स्योन इत्यत्र वार्णशास्त्रेकोयणचीत्यत्रत्याचीत्यनेन सप्तम्यन्तेन ऊन इति गृह्यते तच्चाङ्गशास्त्रस्थेन केनापि पदेन न गृह्यत इति न तत्र तत्त्वम्। एवमुच्छतीत्यत्रापि बोध्यम्। इत्थं च वार्णशास्त्रीयसप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयोज्यविषयतापर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतोपस्थितीयमुख्यविशेष्यताप्रयोजकपदघटितत्वं वार्णसमाननिमित्तकत्वमाङ्गशास्त्रस्य पारिष्कृतं पर्यवसितम्। गा अ आते इत्यत्राकः सवर्णइति वार्णशास्त्रीयसप्तम्यन्ताच्पदप्रयोज्यविषयतापर्याप्त्यनुयोगितावच्छेदकधर्मः अवृत्तितद्व्यक्तित्वम्, आतोङ्कित एतच्छास्त्रीयात इत्यस्यादन्तादित्यर्थेन तत्प्रयोज्योपस्थितीयमुख्यविशेष्यताया गा अ इत्यदन्ते सत्वेन तादृशधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतोपस्थितीयात्वावच्छिन्नविषयताया अदन्तनिष्ठविशेष्यतानिरूपितप्रकारतासमानाधिकरणत्वेन मुख्यत्वाभावात्। अदन्तत्वावच्छिन्नोपस्थितीयमुख्यविशेष्यतायाश्च तादृशधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकत्वाभावेनोक्तसमाननिमित्तकत्वाभावेनातोङ्कित इत्यस्य पूर्वमप्रवृत्त्या नोक्तदोषावकाशः। एवं गान इत्यत्राप्यूह्यम्। वृद्ध्यादेः स्थानिवत्त्वेनेति। न चेयायेत्यादौ ऐकारे-

निवत्त्वेनासवर्ण इति प्रतिषेधादिति वाच्यम् । सूत्रारम्भसामर्थ्यादेव स्थानिवत्त्वाप्रवृत्तेः । तच्च सामान्यापेक्षम-

---

स्थानिवत्त्वेन सवर्णत्वमानीयादेशे पुनः स्थानिवत्त्वेन तदानयनं दुर्लभं लक्ष्येलक्षणन्यायेनात्र लक्ष्ये द्विवारं स्थानिवद्भावाप्रसक्तेरिति वाच्यम् । यूनस्तिरिति निर्देशेन स्थानिवद्भावविषये लक्ष्येलक्षणन्यायाप्रवृत्तेर्ज्ञापनेनादोषात् । अन्यथा यून इत्यत्र पूर्वरूपस्याचःपरस्मिन्नित्यनेन संप्रसारणत्वेपि सवर्णदीर्घे कृते लक्ष्येलक्षणन्यायेन पुनः स्थानिवत्त्वाप्राप्त्या दीर्घस्य संप्रसारणत्वाभावेन नसंप्रसारणइति निषेधाप्राप्त्योक्तनिर्देशासंगतिः स्पष्टैव । किं चात्र पूर्वं स्थानिवद्भावेन ऐकारो न जातः इकारो न निवृत्त इति बुद्धि क्रियेत तर्हि द्वितीयस्थानिवद्भावेन आयृशब्दो न जात ऐकारो न निवृत्त इतिबुद्धिः कर्तुमशक्या द्वितीयस्थानिवद्भावप्रवृत्तिकाले ऐकाराभावात् । किं त्वायादेशो न जात ऐकारो न निवृत्तइत्येवंबुद्धिः पूर्वं करणीया तत ऐकारो न जात इकारो न निवृत्त इत्येव बुद्धिः कार्या तथा च स्थानिवत्सूत्रस्य प्राथमिकप्रवृत्तिकाले उद्देश्यत्वेनाश्रीयमाणः आयृशब्दः स्वाघटकत्वस्वघटकमात्रोद्देश्यकविकारेतरत्वोभयसंबन्धेन तद्विशिष्ट ऐकारस्तद्घटितत्वेन तदघटितत्वरूपतल्लक्ष्यत्वस्यैकारे ऽभावेन लक्ष्येलक्षणन्यायाप्रवृत्तेः । पूर्वरीत्या ऽऽयादेशसवर्णत्वबुद्धावप्याकाररूपासवर्णमादायेयादेशस्य दुर्वारत्वाच्च । नन्वेवमपीयर्तीयेथेत्यादौ सूत्रं चरितार्थम् । न चाभ्यासस्याय्वोरितिन्यासेनेकारोकारभिन्नेचि परत इयङ्विधानादुक्तरूपसिद्धेरनेकमात्रागुरुभूतोक्तसूत्रारम्भसामर्थ्येनोक्तार्थज्ञापने बाधकाभाव इति वाच्यम् । सिद्धान्तेप्येतादृशन्यासस्य लाघवेनादरणीयतया स्वांशे चारितार्थ्याभावेनोक्तार्थज्ञापनासंभवादिति चेन्न । अभ्यासस्यानावितिन्यासेनेकारभिन्नेचीयङ् भवतीत्यर्थकेनोक्तस्थलेष्वियङ्सिद्धेर्यथाश्रुतन्यासस्योक्तार्थज्ञापकत्वमिति तदाशयकल्पनेनादोषात् । न च उधातोस्थाले उवोथेत्यत्रोवङर्थं तदावश्यकमिति वाच्यम् । उधातोर्ङित्वेन ततस्थलेसंभवात् । उशब्दादाचारक्विबन्तात्लिटि तु नन्वयपते प्रत्ययान्तत्वेनामो दुर्वारत्वाच्च । अभ्यासकार्यइति । तेन निन्यइत्यादावनिदितामिति नलोपो न । बहुत-

भ्यासकार्ये तदुत्तरखण्डादेशस्य तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्वं नेति । अत एवारतीत्यादौ यणादेशस्य स्था-

---

रखण्डेति । तेन ववृश्चेत्यत्रोरदत्वस्य स्थानिवद्भावे कृते नसंप्रसारणइ-तिनिषेधसिद्धिः । प्रतिबन्धकीभूतेति । चिन्त्यमेतत् । फलाभावा-त् । अरियुरियादित्यत्र त्वन्तरङ्गत्वाद्रिङादेशात्प्रागेवेयङादेशप्रवृत्तेः । इया-तोर्लिटीयतुरित्यत्र यणः स्थानिवत्वेनाभ्यासेकारस्येकोयणचीतियणाप-त्तेः । इयायेत्यत्राप्यायादेशस्य स्थानिवत्वेन लघूपधत्वादभ्यासेकारस्य गु-णापत्तेश्च । किं चारियियादित्यत्र पूर्वं रिङादेशे यलोपापत्तिः । स्था-निवत्वं तु न । पूर्वत्वेन दृष्टत्वाभावात् । नापि रिङो वहिरंगासिद्ध-त्वम् । अक्षद्यूरित्यत्रेव द्वितीयार्थकेन नाजानन्तर्यइत्यनेन तन्निषेधात् । अभ्यासकार्यइतिवचनफलं तु अचीकमतेति । अन्यथोपधाह्रस्वस्य स्था-निवत्वे काशब्दाकारस्य लघुत्वाभावेन सन्वद्भावाप्रवृत्त्यापत्तिरिति बो-ध्यम् । न च दीर्घो लघोरितिसूत्रारम्भसामर्थ्येन न स्थानि-वत्वमिति वाच्यम् । पतशब्दादाचारक्विबन्तात्कर्तरि क्विपि अ-ल्लोपे ततः प्रातिपदिकणिचि चङि अपीपतदित्यत्र तच्चारितार्थ्यात् । अत्राल्लोपस्य स्थानिवत्त्वान्नोपधाकार्यम् । दीर्घे त्वल्लोपस्य स्थानिव-त्त्वेप्यभ्यासस्य लघुपरत्वाक्षतेर्दीर्घविधौ तन्निषेधाच्च दीर्घोलघोरित्य-स्य चारितार्थ्यसंभवात् । णिनिमित्तकाल्लोपाभावेनानग्लोपइत्यस्यापि विषयाभावादिति बोध्यम् । नन्वेवं विव्यतुरित्यत्रानेन निषेधात्स्थानि-वद्भावाप्राप्त्योपधायां चेति दीर्घापत्तिरिति चेन्न । एतद्वचनस्याभ्यास-स्येति सूत्रदेशस्थत्वेन सापादिकतया त्रैपादिकोपधादीर्घे ऽप्रवृत्तेः । न-चौननदित्यादावनेन निषेधात्स्थानिवद्भावाप्राप्त्योपधावृद्ध्यापत्तिरिति वाच्यम् । उत्तरखण्डस्यार्थवतो ग्रहणेनात्रोत्तरखण्डस्य नेत्यस्यानर्थकतयो-क्तनिषेधाप्रवृत्तेः । औनिनदित्यस्यैव साधुत्वेन ग्रन्थकृतामभिप्रेतत्वाच्च । नचैवं वारणेपि दधावित्यत्र स्थानिवत्त्वनिषेधादुपधावृद्ध्यापत्तिर्दुर्वारेति वाच्यम् । उत्तरखण्डमात्राजादेशस्येत्यर्थेनादोषात् । अत एवेति । स्था-निवत्त्वनिषेधकैतद्वचनस्वीकारादेवेत्यर्थः । वस्तुतोत्र निषेधस्य नोपयोगः । शिवोर्च्य इत्यादौ रुशब्दाभावे ऽप्यतोरोरिति शास्त्रं प्रवृत्तमिति जानन्न-

निवत्वादभ्यासस्य ढ्रलोप इति दीर्घो दुर्लभ इत्यपास्तम् । दीर्घविधौ तन्निषेधाच्च । अरिर्यियादित्यत्र तु स्थानिवत्वेनेयङ् भवत्येव तस्य स्थानिवत्वस्याभ्यासकार्यप्रतिबन्धकत्वाभावात् ॥ इयं चांगसंबन्धिन्यांग एवेति स्वरितो वेति सूत्रे भाष्ये । तत्र हि कुमार्यै इत्यादौ यणुत्तरमाडुक्तः । इयं चा-

---

०

प्याद् गुण इति शास्त्रं स्वीयोद्देश्यतावच्छेदकाक्रान्तिं दृष्ट्वा यथा प्रवर्तते तथैवात्र ऋकारे परेपि रोरीतिशास्त्रं प्रवृत्तमिति जानन् मदीयनिमित्तस्य रेफलोपप्रयोजकस्य ऋकारस्य सत्वेन रेफलोपप्रयोजकवर्णमात्रनिमित्तकं ढ्रलोपइति शास्त्रमारतीत्यत्र प्रवर्तेत । ढ्रलोपसूत्रे ढरयोरित्यस्यानुवृत्यभावेन तयोस्तेन रूपेण निमित्तत्वाभावात् । अत एव तत्र वृत्तौ ' अर्थात् ढकाररेफात्मके ' इत्युक्तम् । दीर्घविधाविति समाधानमप्ययुक्तमेव । स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवदित्युक्तेः । न चात्र दीर्घग्रहणस्य फलाभावः । जनौरित्यत्रोपधादीर्घवारणाय तस्यावश्यकत्वात् । ननु वार्णाङ्गयोः समानस्थानित्वएवैतत्प्रवृत्तिस्वीकारे वारि इ इत्यवस्थायामुक्तयुक्त्या वार्णपरिभाषाया अप्रवृत्त्यान्तरङ्गत्वात्सवर्णदीर्घापत्तिः । न च नुमोदीर्घापवादत्वम् । सकललक्ष्यप्राप्तत्वेन यणपवादत्वस्यैव न्याय्यत्वात् । समाननिमित्तकत्वएवैतत्प्रवृत्तिस्वीकारे तु कारक इत्यत्र यण् वृद्ध्योरुक्तसमाननिमित्तकत्वाभावेनान्तरंगत्वाद्यणापत्तिश्चेत्यत आह । अंगसंबन्धीति । अंगावयवसंबन्धीत्यर्थः । तेन न धर्मिग्राहकमानविरोधः। तथा च समाननिमित्तकेति समानस्थानिकेतिचानुत्क्वैतदेव वक्तव्यमिति भावः । नन्वेवं छ्वोरितिसूत्रे सतुक्कनिर्देशो व्यर्थः वार्णपरिभाषया तुकं बाधित्वा पूर्वमेव शादेशप्रवृत्तेरित्यत आह । इयं चानित्येति । न चात्र वार्णांगयोरेककाले प्रवृत्त्यभावेनैतदप्रवृत्त्यान्तरंगत्वाच्छादेशात्पूर्वं तुकः प्रवृत्तेस्तदभावार्थं सतुक्कनिर्देशस्यावश्यकत्वामिति वाच्यम् । आंगकार्यप्रवृत्तिसंभावनायामपि वार्णपरिभाषाप्रवृत्तेः स्वीकारेणादोषात् । अत एवाध्यैयातामित्यत्र लावस्थायामटचपीयङ्रूपांगकार्यप्रवृत्तिसंभावना-

नित्या छ्वोरिति सतुग्निर्देशात् । अन्यथान्तरंगत्वात्पूर्वं तुकः शादेशे तुको ऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेत्यन्यत्र विस्तरः ॥ ५५ ॥

नन्वेवं सेदुष इत्यादौ क्वसोरन्तरंगत्वादिटि ततः संप्रसारणे ऽपीटः श्रवणापत्तिरिति चेत् । अत्र के चित् ।

---

यां पूर्वमाटश्चेतिवृद्ध्यभावोन्यथान्तरंगत्वादाटश्चेति वृद्ध्युत्तरमियङ्प्राप्त्या ऽऽयादेश उपसर्गस्य यणि अध्यायातामित्यस्यापत्तेः । के चित्तु धर्मिग्राहकमानाद्वार्णांगयोः समानस्थानिकत्वे समाननिमित्तकत्वे वैतत्प्रवृत्तिस्वीकारेण तुक्शत्वयोस्तथात्वाभावादेतदप्रवृत्त्यान्तरंगत्वात्तुकि तन्निवृत्तये सतुक्कनिर्देशावश्यकत्वेन तस्य तदनित्यत्वे ज्ञापकत्वासंभवः फलाभावश्च । न च मघोन इत्यादौ संप्रसारणे मघ उ अन् अस् इति स्थिते पूर्वरूपं बाधित्वा ऽऽङ्गत्वादल्लोपोन इत्यल्लोपे विभक्तेरुदात्तनिवृत्तिस्वरापत्तिरेतदनित्यत्वेनान्तरंगत्वात्पूर्वरूपे त्विष्टस्वरः सिद्ध्यतीति वाच्यम् । ज्ञापकसाजात्यादस्याः भावकार्यविषयकत्वकल्पनेनादोषात् । वार्णशास्त्रीयेन सप्तम्यन्तपञ्चम्यन्तान्यतरपदेन या व्यक्तिर्गृह्यते तदादिसमुदायो यत्राङ्गशास्त्रीयपदेन स्वप्रयोज्योपस्थितीयमुख्यविशेष्यतया गृह्यते इत्येतादृशसमाननिमित्तत्वपरिष्कारेण कारक इत्यत्रेकोयणचीतिशास्त्रीयाच्पदेनाकसंबन्ध्यकारो गृह्यते तदादिरकशब्दो वृद्धिविधायकशास्त्रीयपदेन स्वप्रयोज्योपस्थितीयमुख्यविशेष्यतया गृह्यतइति तयोः समाननिमित्तकत्वेनानया पूर्वं वृद्धिसिद्धिः । समानस्थानिकत्वएतत्प्रवृत्तिस्वीकर्तृमते ऽपि वारिणीत्यादौ नुमा बाध्यसामान्यचिन्तया दीर्घस्यापि बाधकल्पनान्न दोषः । अत एव राजन्य इत्यत्र यचिभमित्यनेन सुप्तिङन्तमितिपदसंज्ञाया अपि बाधेन नलोप इति प्राहुः ॥ ५६ ॥

एवं, लौकिकान्तरङ्गपरिभाषास्वीकारे । अन्तरङ्गत्वादिटीति । सेदुष इत्यादाविट्प्रवृत्तिकाले संप्रसारणस्याप्राप्तिरूपबहिरङ्गत्वेनासिद्धत्वा-

# अकृतव्यूहाः पाणिनीयाः ५६

न कृतो विशिष्ट ऊहो निश्चयः शास्त्रप्रवृत्तिविषयो यैरित्यर्थः । भाविनिमित्तविनाशइत्यध्याहारः । बहिरङ्गेणान्तरङ्गस्य निमित्तविनाशे पश्चात्सम्भाविते ऽन्तरंगं नेति यावत् । अत्र च ज्ञापकं समर्थानां प्रथमादिति सूत्रे समर्थानामिति । तद्धि सूत्थितादिभ्यः कृतदीर्घेभ्यः प्रत्ययोत्पत्यर्थम् । अन्यथान्तरंगत्वाद्दीर्घे कृत एव प्रत्ययप्राप्त्या तद्व्यर्थता स्पष्टैव । तत्र हि भाविन्यादिवृद्ध्या सवर्णाच्त्वविनाशः स्पष्ट एव ॥ न चात्रैकादेशप्रवृत्तिसमये वृद्ध्यप्राप्त्यैकादेशे कृत आदेशे वृद्धेः प्राप्तावपि तन्निमित्तविनाशाभाव इति वाच्यम् । तद्द्वारैव तन्निमित्तविनाशसत्वेनाक्षतेः ॥ न च सौत्थितौ बहिरंगतया वृद्धेरसिद्धत्वान्न तन्निमित्तविनाश इति वाच्य-

---

र्लौकिकान्तरङ्गपरिभाषया पूर्वमिटीत्यर्थः । तन्निमित्तविनाशाभाव इति । सवर्णदीर्घेणैव तन्निमित्तविनाशस्य कृतत्वाद्वृद्ध्या सवर्णदीर्घविनाशाभाव इत्यर्थः । तद्द्वारैवेति । वृद्ध्या ऽऽदेशविनाशेनादेशविनाशप्रयुक्त औपचारिकः सवर्णदीर्घनिमित्तविनाश इति भावः । तथा च बहिरङ्गेणान्तरङ्गनिमित्तविनाशे तत्स्थानिकादेशविनाशे पश्चात्संभाविते सति पूर्वमन्तरङ्गं न प्रवर्ततइति परिभाषार्थः । अत्र पश्चात्पदोपादानं तु यत्रान्तरङ्गप्रवृत्तियोग्यकालोत्तरमेवान्तरङ्गनिमित्तविनाशकबहिरङ्गप्राप्तिरिति पूर्वोक्तार्थं बोधयितुम् । न तन्निमित्तविनाश इति । अकृतव्यू-

म् । समर्थग्रहणेनैतद्विषये तस्या अप्रवृत्तेरपि ज्ञापनात् ॥ यत्तु समर्थग्रहणेनान्तरंगपरिभाषाया अनित्यत्वमेव ज्ञाप्यत इति। तन्न। असिद्धपरिभाषया समकालप्राप्तबहिरंगस्य पूर्वं जातबहिरंगस्य चान्तरंगे कर्तव्ये ऽसिद्धत्वं बोध्यते न तु जाते ऽन्तरंगे तस्य तत्वं बाध्यते मानाभावात् फलाभावाच्च। एवं च सूस्थितादावेकादेशस्य परिभाषासाध्यत्वाभावेन तदनित्यत्वज्ञापनासंभवात् ॥ अन्तरंगानपिविधीनित्यादेरप्यस्यामेवान्तर्भावः। एतत्प्रवृत्तौ च निमित्तविनाशसम्भावनापि निमित्तम् । अत एव गोम-

---

हपरिभाषारूपेन्तरङ्गे कर्तव्ये वृद्धेरसिद्धत्वान्नान्तरङ्गनिमित्तविनाशज्ञानमकृतव्यूहेति परिभाषाया इति नात्र प्रकृतपरिभाषाप्रवृत्त्यवकाशः । एतस्या अन्तरङ्गत्वं तु सवर्णदीर्घरूपान्तरङ्गानिमित्तानिमित्तकत्वाद् बोध्यमिति भावः । समर्थेति । एतत्परिभाषाविषये निरुक्तरीत्यान्तरङ्गपरिभाषाप्रवृत्तिस्वीकारे तु समर्थग्रहणवैयर्थ्यापत्त्या ऽकृतव्यूहपरिभाषारूपान्तरङ्गे कर्तव्ये ऽन्तरङ्गपरिभाषाया अप्रवृत्तिकल्पनादिति भावः । यत्त्विति । अंतरङ्गपरिभाषाया अनित्यत्वेनाङ्गत्वादिडाद्यप्राप्तिरित्यकृतव्यूहपरिभाषावैयर्थ्यमेवेति भावः । परिभाषासाध्यत्वाभावेनेति । पूर्वोक्तज्ञापकसिद्धान्तरङ्गपरिभाषाया अप्राप्त्या तदनित्यत्वज्ञापनासंभवादित्यर्थः । केचित्तु लौकिकान्तरङ्गपरिभाषाया अत्र समर्थग्रहणेनाप्रवृत्तिकल्पनायां पूर्वमिडादेरप्राप्त्या सेदुष इत्यादौ दोषाभावेन परिभाषैषा व्यर्थेति वदन्ति । निमित्तविनाशसंभावनापीति । इयं च संभावनान्तरङ्गशास्त्रप्रवृत्त्यभावसंभावनाप्रयोज्या बोध्या न त्वन्तरङ्गशास्त्रप्रवृत्तिसंभावनाप्रयोज्या । अन्यथा भाविनिमित्तविनाशइत्यध्याहारेणैवैतदर्थलाभे एतत्कथनवैयर्थ्यापत्तेः । अत एवाग्रे 'अस्ति चात्रापि यदि लोपो न स्या'

द्दण्डीत्यादौ हलङ्यादिलोपो न। अन्यथा हलङ्यादिलोपकाले सामासिकलुको ऽप्राप्त्या तदुत्तरं चापहार्याभावादप्राप्त्या लोपस्यैवापत्तेः। अस्ति चात्रापि यदि लोपो न स्यात्तर्हि लुक् स्यादिति सम्भावना॥ अल्लोपो नेति सूत्रस्थतपरकरणं तु परिभाषानित्यत्वज्ञापनेन चरितार्थम्। तद्ध्यान इत्यादौ लोपवारणाय। अन्यथा दीर्घाभावे लोपसम्भावनयैतत्परिभाषाबलाद्दीर्घाप्राप्तौ तद्वैयर्थ्य स्पष्टमेवेत्याहुः॥

समर्थानामिति सूत्रे कैयटस्तु समर्थवचनेनेयं परिभाषा ज्ञाप्यते। अकृतव्यूहाः पाणिनीया इति। तेन पपुष इत्यदावन्तरंगत्वात्पूर्वं कृतो ऽपीडागमो निवर्तत इति वदन्न कृतो व्यूहो विशिष्टस्तर्को निमित्तकारणविनाशेपि कार्यस्थितिरूपो यैरित्यर्थमभिप्रैति। निमित्तापाये नैमित्तिकस्याप्यपाय इति यावत्। सूत्थितादित्रि वृद्धौ दीर्घनिवृत्तौ सावुत्थितिर्माभूदिति समर्थाना-

---

दित्यादिना तथैवोपपादितम्। तथा च स्वप्रवृत्त्यभावसंभावनाप्रयोज्या यत्र बहिरङ्गेण स्वनिमित्तविनाशसंभावना तत्र स्वमन्तरङ्गं पूर्वं न प्रवर्तत इति प्राचीनाभिमतो निरुक्तपरिभाषाया मुख्यार्थः। एतावत्पर्यन्तं परिभाषाविषयपरिशीलनं तु प्राचीनोक्तमतिफल्गिवति परान् बोधयितु मिति दिक्। अनित्यत्वज्ञापनेन चरितार्थमिति। दान् शान्भ्यां क्विपि दान इत्यादौ लोपवारणं तु न तत्फलं, अर्थविशेषे सनः प्रवृत्त्यार्थान्तरे तु नित्यण्यन्तत्वेन च तत्राल्लोपाप्राप्तेः। आहुरिति। दीक्षितप्रभृतय इत्यर्थः। सावुत्थितिर्माभूदिति। सवर्णदीर्घेण स्थानिनिवृत्तिः

मिति ॥ लोकन्यायसिद्धश्चायमर्थः । तथा हि । लोके निमित्तं द्विविधं दृष्टम् । कार्यस्थितौ नियामकं तदनियामकं च । आद्यं यथा न्यायनये ऽपेक्षाबुद्धिस्तन्नाशे द्वित्वनाशाभ्युपगमात् । वेदान्तिनये प्रारब्धस्य विक्षेपस्थितिनियामकत्वं च प्रसिद्धमेव । द्वितीयं यथा दण्डादि तन्नाशेपि घटनाशादर्शनात् । शास्त्रे लक्ष्यानुरोधाद्व्यवस्था ॥ भाविनिर्मित्तविनाशे पूर्वमनुत्पत्तौ तु न कश्चिन्न्यायो नापि संप्रतिपन्नो दृष्टांतः । समर्थानामित्यस्यापि लोकसिद्धार्थज्ञापनेन चारितार्थ्यसम्भवे लोकासिद्धापूर्वतादृशार्थज्ञापकत्वे मानाभाव इति तदाशय इति बोध्यम् ॥

परे तु सेदुष इत्यादौ पदावधिके ऽन्वाख्याने सेद्वस् अस् इति स्थिते इट्संप्रसारणयोः प्राप्तयोः प्रतिपद-

---

-क्रियते तथा च सौत्थितिरित्यत्रोकारद्वयनिवृत्तिनिमित्तस्य सवर्णदीर्घरूपोकारस्यादिवृद्ध्या ऽपाये जाते स्थानिरूपोकारद्वयनिवृत्तिरूपस्य नैमित्तिकस्यापायो ऽर्थादुकारद्वयसत्ता संपन्ना । तत्राद्योकारस्य निवृत्तिपूर्वकमौकारे विहिते सौ उत्थित इ इति दशायामावादेशे सावुत्थितिर्माभूदिति समर्थग्रहणमिति भावः । विक्षेपेति । विक्षेपस्य संसारस्य स्थितेर्नियामके त्यर्थः । लोकन्यायसिद्धश्चेति । वस्तुतस्त्वपेक्षाबुद्धिप्रारब्धयोर्द्वित्वविक्षेपस्थितिनियामकत्वस्य तन्नाशयोस्तन्नाशनियामकत्वस्य च प्रमाणसिद्धत्वेपि निमित्तनाशमात्रस्य कार्यनाशनियामकत्वे प्रमाणाभावाद् दृष्टान्तासिद्धिरत्र बोध्या । दीक्षितमते तु प्रक्षालनाद्धि पङ्कस्येतिन्यायो लाघवमूलको लुकानुत्पत्तिरिवेतिदृष्टान्तश्च मूलमित्यवेहि । प्रदिपदविधित्वादिति । न

विधित्वात्पूर्वं संप्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेति तत्सिद्धिरिति स्पष्टं समर्थानामिति सूत्रे कैयटे, ऽसिद्धवत्सूत्रे कैयटे च स्पष्टमेतत्। यद्यपि प्रतिपदाविधित्वमनवकाशत्वे सत्येव बाधकत्वे बीजं, तथापि पूर्वप्रवृत्तौ सावकाशत्वेपि नियामकं भवत्येवेति तदाशयः । निरूपितं चैतद् बहुशः शब्देन्दुशेखरादौ ॥ समर्थानामिति सूत्रस्थसमर्थग्रहणं तु त्रिषुण इत्यादावकृतसन्धेः प्रत्ययदर्शनेन सर्वत्र तथा भ्रमवारणाय न्यायसिद्धार्थानुवाद एव ॥ ध्वनितं चेदं विप्रतिषेधसूत्रे भाष्ये । तत्र हि वैक्षमाणिरित्य-

---

चेटोपि वसुशब्दमुच्चार्य विहितत्वेन प्रातिपदविधित्वं समामिति वाच्यम् । प्राप्तावित्यस्याग्रे 'पूर्वं किं कर्त्तव्यमिति विचारः परं तु' इति ग्रन्थशेषं प्रपूर्य सद् वस् अस् इति दशायां कृतद्विर्वचनैकाचोभावेन वस्वेकाजितिशास्त्रस्याप्राप्त्या द्वित्वादितः पूर्वमेव प्रतिपदोक्तत्वेन संप्रसारणे इति ग्रन्थयोजनेनादोषात् । केचित्तु वस्वेकाजितिसूत्रे वलीत्यनुवृत्त्या तत्सामर्थ्येन संप्रसारणप्रवृत्तिसंभावनायामिटोप्राप्तिः । अत एव वलादित्वाभावादिति मूलोक्तिः संगच्छत इति वदन्ति । अन्ये तु प्रतिपदविधित्वादित्यस्येट्संप्रसारणयोः प्राप्तावित्यत्रान्वयः । पूर्वं संप्रसारणइत्यावर्तते । 'पूर्वंसंप्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेति ग्रन्थेनेटोनित्यत्वमुपवर्णितम् । इतीत्यस्य नित्यत्वादित्यर्थः । तथा च पदावधिके ऽन्वाख्याने सेद् वस् असितिस्थिते प्रतिपदविधित्वादिट्संप्रसारणयोः प्राप्तौ पूर्वं संप्रसारणे वलादित्वाभावादिटः प्राप्तिरेवनेतींटो ऽनित्यत्वेन नित्यत्वात्पूर्वं संप्रसारणे तत्सिद्धिरिति यथाश्रुतमेव ग्रन्थं योजयन्ति । निरूपितं चेति । चान्निरूपयिष्यते चापवादप्रकरणे मूलेपीत्यर्थः । ननूक्तपरिभाषानभ्युपगमेन्तरंगत्वादेव कृतसन्धेस्तद्धितोत्पत्तौ समर्थग्रहणवैयर्थ्यमित्यत आह । भ्रमवारणायेति । वैक्षमाणिरिति । सिद्धान्ते

न्तरङ्गपरिभाषोदाहरणमुक्तम् । किञ्च विभज्यान्वाख्याने सु उत्थित अस् इ इति स्थिते वार्णादाङ्गं बलीय इति प्राप्तवृद्धिवारणाय समर्थग्रहणमित्यत्रैव कैयटे स्पष्टम् ॥ अत एवासिद्धवत्सूत्रे वसुसंप्रसारणमज्विधौ सिद्धं वक्तव्यं पपुष इत्यादौ वसोः संप्रसारणे कृते आतो लोपो यथा स्यादिति भाष्ये उक्तम् । पदस्य विभज्यान्वाख्याने पूर्वोक्तकैयटरीत्या पूर्वं संप्रसारणे इटो ऽप्राप्तावुस्निमित्तक एवातो लोप इति तदाशयः।अन्यथान्तरंगत्वादिटि तन्निमित्तक एवातो लोप इति तदसंगतिः ॥ अत एव चौ प्रत्यंगस्य प्रतिषेध इति वचनं वार्तिककृतारब्धं भाष्यकृता च न प्रत्याख्यातम् । प्रत्यंगमन्तरंगम् । अस्यां परिभाषायां सत्यां तु तद्वैयर्थ्यं स्पष्टमेव ॥ अत एव च्छ्वोरि-

---

समर्थग्रहणेन तद्धितविधावकृतेतिपरिभाषाया अप्रवृत्तेरन्तरंगत्वादेव वैक्षमाणिरित्यत्र सवर्णदीर्घप्रवृत्तिर्युक्तेत्यरुचेराह । किं चेति । वार्णादांगमितिपरिभाषाया अकृतेतिपरिभाषारूपतया समर्थग्रहणसार्थक्योपपादनं नास्माकं प्रतिकूलमित्यरुचेराह। अत एवेति । दीक्षितमते पूर्वमिटोप्राप्त्या ऽजादित्वाभावेनातोलोपाप्राप्तिरिति वसुसंप्रसारणमित्यस्यावश्यकतया न भाष्यविरोधः । वस्तुतः कैयटमतेपि अन्तरङ्गत्वाज्जातस्येटो निमित्तापाय इति परिभाषया संप्रसारणोत्तरं निवृत्त्या इड्निमित्तकातोलोपाप्राप्त्या उस्निमित्तक एव तल्लोपो वाच्यस्तस्यासिद्धत्वेन लोपाप्राप्त्या वार्तिकावश्यकत्वेन न भाष्यासंगतिरित्यरुचेराह । अत एव चौ प्रत्यंगस्येति । न प्रत्याख्यातमिति । अकृतव्यूहपरिभाषारूपत्वादन्तरंगानपीति न्यायादिवदेतन्न प्रत्याख्यातमित्यरुचेराह । अत एव

ति सूत्रे अवश्यमत्र तुगभावार्थो यत्नः कार्यो ऽन्तरंगत्वा-
द्धि तुक् प्राप्नोतीति भाष्ये उक्तम्। एतत्सत्वे तु तुकोऽप्राप्त्या
यत्नावश्यकत्वकथनमसंगतमिति स्पष्टमेव । न चै-
तदनित्यत्वज्ञापनार्थमेव तदिति तदाशयः। अवश्यमत्रेत्यक्षर-
स्वारस्यभंगापत्तेः ॥ किञ्चानयैव प्रत्ययोत्तरपदयोश्च
अदो जग्धिर्ल्यप्ति किति इत्यनयोश्चारितार्थ्येन तज्ज्ञापक-
वशाल्लुग्ल्यपोरन्तरंगबाधकता भाष्योक्ता भज्येत ॥

किञ्चैषा भाष्ये न दृश्यते । तदुक्तमसिद्धवत्सूत्रे

---

च्छ्वोरिति । वस्तुतस्तु प्रतीच इत्यादौ यणादिवारणाय वार्तिककृता-
रब्धस्यैतद्वचनस्य चाविति दीर्घारम्भसामर्थ्येन यणाद्यभावं प्रतिपाद्य
भगवतैतद्वचनं प्रत्याख्यातमेव । तदुक्तं भाष्ये,इहान्ये आचार्याश्चौ
प्रत्यङ्गस्य प्रतिषेधमाहुस्तदिहापि साध्यम् । नैष दोषः । एत-
देव ज्ञापयत्याचार्यो न चौ प्रत्यङ्गं भवतीति यदयं चौ दीर्घत्वं शास्ती-
ति । न च प्रकृतपरिभाषया सिद्धे ज्ञापकाश्रयणं निष्फलमिति वाच्य-
म् । तज्ज्ञापकेनांशिकैतत्परिभाषार्थज्ञापनस्यैव सत्वेन तत्सिद्धिरित्या-
शयात् । अत एव ज्ञापयतीत्युक्तम्, अन्यथा दीर्घविधानसामर्थ्यादित्येव
वदेदिति बोध्यम् । अक्षरस्वारस्यभङ्गापत्तेरिति । अत्राक्षरस्वारस्य-
रसमास्वादयद्भिर्ग्रन्थकृद्भिर्वर्णपरिभाषाया अनित्यत्वनिरूपणावसरे क-
थमक्षरस्वारस्यभंगोऽङ्गीकृत इति तु तएव प्रष्टव्याः । किं च प्रकृ-
तिप्रत्यापत्तिवचनादिनास्या अनित्यत्वेन तुको निवृत्तये यत्नावश्यक-
त्वकथनं युक्तम् । किं च वाञ्छतेः क्विपि शादेशाप्रवृत्तये सतुक्कनिर्दे-
शस्यावश्यकत्वमित्यरुचेराह । किं चानयेति । तत्तज्ज्ञापकैरंशत ए-
तत्परिभाषाया एव ज्ञापनेन न भाष्योक्तोक्तज्ञापकताभंग इत्यरुचेराह। किं
चैषेति । अन्तरंगानपीत्यादेरेतद्वचनरूपतया तद्रूपेणैवैतद्दर्शनस्यापि सत्वेन
नदृश्यत इति कथनं साहसमात्रमित्यरुचेराह । तदुक्तमिति । निमि-

कैयटेन निमित्तापाये नैमित्तिकस्याप्यपाय इति परिभाषाया भाष्यकृतानाश्रयणादिति ॥ पदसंस्कारपक्षे हरिरित्यादौ विसर्गे कृते ततो गच्छतीत्यादिसंबन्धे हरिः गच्छतीत्याद्येव साधु । तद्विषये पदसंस्कारपक्षानाश्रयणं

---

त्तापायइतिपरिभाषा भाष्यानुक्ता कथं कैयटेनाश्रितेति स एव प्रष्टव्यः । दीक्षितोक्ता तु सा ऽन्तरंगानपीत्यादिशब्दैर्भाष्यकृता ऽऽश्रितैवेति बोध्यम् । वस्तुतस्तु निमित्तापाय इत्यादिशब्दैरेषा भाष्ये ऽनाश्रितेति तदर्थेन कैयटस्यापि नोक्तविरोध इति तत्वम् । प्राचीनोक्तं परिभाषाफलमन्यथयति । पदसंस्कारेति । ननु विसर्जनीयस्य स इति सूत्रस्थभाष्यप्रामाण्येनात्र पदसंस्कारपक्षाश्रयणमशक्यम् । तत्र हि खरीत्यस्यानुवृत्त्यभावेपि खर्येव विसर्गइति प्रतिपादनाय खरवसानयोर्विसर्गं विधाय तस्यानेन सत्वविधानादन्यतरस्मिन् सत्वं, यदि च खरवसानयोरुभयोरपि सत्वं स्यात्तर्हि विसर्गविधानं व्यर्थं स्यादित्युपक्रम्य शर्परे विसर्जनीय इति ज्ञापकात्खर्येव विसर्जनीयस्य स इत्यस्य प्रवृत्तिः । विपर्यये तु खरि विसर्जनीयस्य सिद्धतया पुनर्विधानमनर्थकं स्यादित्युक्तम् । यद्यवसाननिमित्तकस्य विसर्जनीयस्य पदान्तरसंमभिहारेणावसानभङ्गसंभावनायामपि विसर्जनीयस्य पूर्वं प्रवृत्तिः प्रवृत्तस्य निमित्तविनाशे निवृत्त्यभावस्तदा तादृशविसर्गघटिते कः त्सरुरित्यादौ सत्वनिवृत्तये विसर्जनीयविधानेन सार्थकस्य शर्परइत्यस्य भाष्यकारोक्ता ज्ञापकता भज्येत । तस्मादिह विसर्जनीयरहितस्य हरिर्गच्छतीत्यादेरेव साधुत्वं, तच्च परिभाषैकसाध्यमित्यवश्यं पदसंस्कारेपि सा स्वीकार्या परिभाषेत्यरुचेराह । तद्विषयेति । अनाश्रयणमिति । तथा चोक्तपक्षयोर्व्यवस्थिततया सेदुष इत्यत्र पदसंस्कारपक्षाश्रयणमुक्तस्थले वाक्यसंस्कारपक्षाश्रयणमिति सर्वेष्टसिद्ध्योक्तपरिभाषाश्रयणं निष्फलमिति भावः । हरिः ओमित्यत्र तु वैदिकसंप्रदाय एव शरणम् । वागाशीर्दत्ता वाचिकं इत्यादौ तु संपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतायां त्रैपादिकस्य पूर्वमप्रवृत्त्या कुत्वाद्यभावः । वृक्षोवृक्षः सिच्यतइत्यत्र वृक्षस् इति सान्तस्यैव द्वित्वं न तु विस-

वेति दिक् ॥ ५६ ॥

# अन्तरङ्गादप्यपवादो बलवान् ॥ ५७ ॥

र्गान्तस्य । पूर्वत्रासिद्धमद्वित्व इति त्वनित्यं तेन विसर्गात्प्राक् द्वित्वेन रुत्वादिसिद्धेर्नं तदप्युक्तपरिभाषाफलम् । एवं ष्टुगतिनिवृत्तावित्यत्र सूत्रे ष्टुत्वेपि त्रेस्त्रय इत्यादौ त्रिशब्दवत् षृथाइत्यस्यैव नकारजावित्यभियुक्तोक्त्या बोधकत्वावगमेन स्थानमित्यादिलक्ष्येषु न टवर्गश्रवणमित्येवं सर्वत्रोक्तपरिभाषासाध्यफलानामन्यथासिद्ध्यैषा निष्फलेति नागेशानुयायिनः । वस्तुतस्त्वन्तरंगानपीत्याद्यनेकवचनकल्पनापेक्षयानुगतैतत्परिभाषारूपवचनकल्पनमेव युक्तम् । अत एव वैभाजित्रमिति सिद्ध्यति । अन्यथान्तरंगत्वाण्णेर्गुणायादेशयोर्विभाजयितुर्णिलोपश्चात्र् च वक्तव्य इत्यनेनान्त्यस्य यकारमात्रस्य लोपापत्तेः । मम त्वक्कृतेतिपरिभाषया गुणायादेशाप्राप्त्या णिरूपेकारलोपेनेष्टसिद्धिः । न च विभाजयितुर्यलोप इति वक्तव्ये णिलोपकथनं सर्वादेशार्थमिति वाच्यम् । त्रिभाजीतिप्रातिपदिकादाचारक्विबन्तात्तृचि निष्पन्नविभाजयितृशब्देयलोपापत्त्या तादृशस्य कर्तुमशक्यत्वात् । एवं घटसद्वुपोरित्यत्र प्रथमान्तानामेव द्वन्द्वविधानाद् घटस् सद् वस् स् ओसिति स्थिते ऽन्तरंगत्वात्समासात्प्रागेवैत्वाभ्यासलोपयोरिटि तच्छ्रवणापत्तिः । न चान्तरंगानपीति न्यायेन पूर्वं समाससुब्लुकोः कृतयोः पूर्वरीत्या पूर्वं संप्रसारणे दोषाभाव इति वाच्यम् । ज्ञापकसाजात्याल्लुक्स्थानिभूतप्रत्ययनिमित्तकान्तरंगस्थलएव तत्प्रवृत्त्यात्रान्तरंगस्येटस्तादृशप्रत्ययनिमित्तकत्वाभावेनात्र तदप्रवृत्तेः । अत एव गतिकारकोपपदानामितिपरिभाषाया व्याघ्री कच्छपीत्यत्रतरणसंगतिरन्यथान्तरंगानपीतिपरिभाषया टापो लुक्स्थानिभूतसुब्निमित्तकत्वाभावेपि पूर्वं समाससुब्लुकोः कृतयोरपवादत्वादेव ङीषा टापो बाधसिद्धेस्तदसंगतिः स्पष्टैवेति दिक् ॥ ५६ ॥

पूर्वपरेतिसंग्राहकवाक्येन बोधितं चरममर्थमनुमानेन प्रमाणयति । अन्तरंगादिति । अपवादः अन्तरंगान्तशास्त्रेभ्यो बलवान् अपवा-

तत्रापवादपदार्थमाह ।

## येन नाप्राप्ते योविधिरारभ्यते स तस्य बाधको भवति॥५८॥

प्राप्तइतिभावेक्तः॥येननाप्राप्तइत्यस्ययत्कर्तृकावश्यप्राप्ताविन्यर्थो नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् । एवं च वि-

---

दत्वादित्यनुमानप्रयोगः । सर्वथर प्रतिवद्धविकाशस्य सर्वतो बलवत्वदर्शनान्न विपरीतशङ्कावकाश इति लोकन्यायसिद्धोयमर्थ इति बोध्यम् । तत्रेति । घटकत्वं सप्तम्यर्थः । अन्तरंगादपवादो बलवानित्येतद्घटकेत्यर्थः । येन नाप्राप्ते यो विधिरारभ्यते स एतदन्तोपवादपदार्थः । लोके सति विरोधे बलीयसा दुर्बलस्य बाधदर्शनादुच्यते तस्य बाधक इति । नाप्राप्तइत्यत्र निषेधार्थकनशब्दस्य अप्राप्तइत्यनेन सुप्सुपेति समासः । नञो नलोपाभावः पृषोदरादित्वाद्वा बोध्यः। अवश्यप्राप्ताविति । न चात्र लुम्पेदवश्यमः कृत्यइत्यस्याप्राप्त्या कथं मलोप इति वाच्यम् । अवश्यमिति मान्ताव्ययसमानार्थकावश्यशब्देनात्र समासेनादोषात् । अत एवावश्यकाधमर्ण्ययोरिति सौत्रनिर्देशसंगति, र-न्यथा ऽवश्यंशब्दस्य योपधत्वाभावेन वुञोप्राप्त्या तदसंगतिः स्पष्टैव । विशेषशास्त्रेति । विशेषशास्त्रोद्देश्यो यो विशेषधर्मावच्छिन्नस्तद्वृत्तिर्यस्सामान्यधर्मस्तदवच्छिन्नोद्देश्यताकशास्त्रस्य विशेषशास्त्रेण विशेषधर्मावच्छिन्नोद्देश्यताकशास्त्रेण बाध इत्यर्थः । सामान्यत्वं व्यापकत्वम् । विशेषत्वं व्याप्यत्वम् । ननु सामान्यधर्मे विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नवृत्तित्वरूपं विशेषणं व्यर्थं सामान्यधर्मे विशेषशास्त्रोद्देश्याविशेषधर्मावच्छिन्नवृत्तित्वासत्वे तस्य सामान्यत्वासंभवादिति चेन्न । उद्देश्यतावच्छेदकतावच्छेदकसंबन्ध एव व्याप्यतावच्छेदको व्यापकतावच्छेदको ग्राह्य इति भ्रमवारणायात्र तत्सार्थक्यात् । अत एव प्रथमैकाच्त्वद्वितीयैकाच्त्वयोरुक्तसंबन्धेन सामानाधिकरण्याभावेपि स्वाश्रयोत्तरत्वादिना सामानाधिकरण्यमादाय व्याप्यव्यापकभावादेकाचोद्वेइत्यस्याजादेर्द्वितीयस्येत्यनेन बाधः सिद्ध्यति । नन्वत्र साक्षादुद्देश्यतावच्छेदकधर्मयोर्व्याप्यव्यापकभावो बाधप्रयोजक उत साक्षात्परंपरासाधारण्येनोद्देश्यता-

वच्छेदकयोः । नाद्यः । नेमौ रहौ कार्यिणौ किं तर्हि निमित्तं द्विर्वचनस्येति भाष्यविरोधापत्तेः । तत्र ह्यचोरहाभ्यामित्येतच्छास्त्रीयोद्देश्यतावच्छेदकतावच्छेदकरत्वस्यानचिचेतिशास्त्रीयसाक्षादुद्देश्यतावच्छेदकयत्वापेक्षया व्याप्यत्वेनापवादत्वात्तद्बाधेन रेफस्य द्वित्वाभावः साधितः । नाप्यन्त्यः । अनुशतिकादिषु पुष्करसच्छब्दपाठसामर्थ्येनादिवृद्धिरन्त्योपधावृद्धीबाधतइत्यर्थज्ञापकपरभाष्यविरोधापत्तेः । परंपरयोद्देश्यतावच्छेदकयोर्ञ्णित्प्रत्ययत्वञ्णित्तद्धितत्वयोर्व्याप्यव्यापकभावेन तद्धितेष्वचामितिशास्त्रेणाचोञ्णित्यतउपधाया इति शास्त्रयोर्बाधादेवोक्तार्थसिद्धेर्निरुक्तभाष्यविरोधः स्पष्ट एवेति चेन्न । व्याप्यव्यापकधर्मयोः साक्षात्परम्परया वा तत्तदुद्देश्यतावच्छेदकयोर्विशेष्यविशेषणदलप्रविष्टयावत्पदार्थसंकुचितयोरेव ग्रहणेन तद्धितेष्वचामादेरितिशास्त्रीयतादृशोद्देश्यतावच्छेदकस्याच्घटितांगावधिकपरत्वविशिष्टञ्णित्तद्धितत्वस्याद्युपधावाधिकपरत्वविशिष्टञ्णित्प्रत्ययत्वाजन्तांगावधिकपरत्वविशिष्टञ्णित्प्रत्ययत्वरूपतदुभयशास्त्रीयोद्देश्यतावच्छेदकाभाववति मारुतशब्दघटकतद्धिते वर्तमानत्वेन तस्य व्याप्यत्वाभावादनेन न्यायेनादिवृद्धेरन्त्योपधावृद्धिबाधकत्वासंभवेनोक्तज्ञापकपरभाष्यविरोधाभावात् । अचोरहाभ्यामित्यत्राजव्यवहितपरत्वयरव्यवहितपूर्वत्वधर्माभ्यां संकुचितस्य रत्वस्य अजव्यवहितपरत्वाजव्यवहितपूर्वत्वाभावरूपधर्मसंकुचितस्यानचिचेतिशास्त्रीयोद्देश्यतावच्छेदकयत्वस्यापेक्षया व्याप्यत्वेन नेमौ रहावितिभाष्यसंगतिश्च । यद्वात्रोद्देश्यतापदेनोद्देश्यदलप्रविष्टशाब्दबोधीयविषयतामात्रं गृह्यते । सा च संकुचितैवास्तीति न विशेष्यविशेषणदलप्रविष्टयावत्पदार्थसंकुचितेति निवेशस्योपयोगः । इत्थं च प्रकारद्वयेपि वृत्यन्तविशेषणदानं निष्फलमेव । एकाचइतिशास्त्रीयोद्देश्यतावच्छेदकधातुत्वस्य तादृशधातुत्वावाच्छिन्नविषयतायाश्चाजादेरितिशास्त्रीयोद्देश्यतावच्छेदकतादृशधातुत्वतादृशधातुत्वावच्छिन्नविषयतयोश्चापेक्षया व्यापकत्वेन तद्बाधसिद्धेरिति बोध्यम् । अत्र च विषयतयोर्व्याप्यव्यापकभावस्तद्विषयतामात्रवृत्तितद्व्यक्तित्वादिनैवेति नाग्रहः । किं त्वन्यतरत्वादिनापि । अत एवेकोयणचीत्येतच्छास्त्रीयेकपदप्रयोज्यविषयताया दैत्यारिरित्यत्रासत्वेनाद्गुण इत्येतच्छास्त्रीयाऽपदप्रयोज्याविषयतायाश्च श्रीश इत्यत्रासत्वेन प्रत्येकवृत्तिध-

र्मपुरस्कारेण तयोर्व्यापकत्वविरहेप्यन्यतरत्वेन तयोर्विषयतयोर्व्यापकत्व- मादायाकःसवर्णइत्यनेनेकोयणच्यादुगुण इत्येतयोर्द्वयोरपि वाधः सिद्ध्य- ति । नन्वेवं कुप्वोरितिशास्त्रेण विसर्जनीयस्यसः शर्परेविसर्जनीय इ- त्येतच्छास्त्रीयविसर्जनीयपदप्रयोज्यविषयताद्वयस्याप्यन्यतरत्वेन स्वघटक- विसर्जनीयपदप्रयोज्यविषयताव्यापकत्वेन तयोर्द्वयोरपि वाधापत्तिः । न च स्वव्यापकतावच्छेदकत्वस्वव्यापकतावच्छेदकाव्यापकत्वोभयसंवन्धेन स्वघटकपदप्रयोज्यविषयताविशिष्टधर्मावच्छिन्नव्यापकतावद्विषयताकशास्त्र- स्य स्वेन वाध इत्यर्थकल्पनेन निरुक्तविषयताद्वयवृत्त्यन्यतरत्वे कुप्वोरिति- शास्त्रीयविसर्जनीयपदप्रयोज्यविषयताया आद्यसंवन्धेन वैशिष्ट्येपि स्वव्या- पकतावच्छेदकविसर्जनीयस्यस इत्येतच्छास्त्रीयविसर्जनीयपदप्रयोज्यवि- षयतावृत्तितद्व्यक्तित्वव्यापकत्वेन द्वितीयसंवन्धेन तदभावाद्वाध्यत्वप्रयो- जकोक्तरूपाभावेन नोक्तशास्त्रद्वयवाध इति वाच्यम् । उर्ऋदितिशास्त्रीय- ऋपदप्रयोज्यविषयताया अपि उपधाया, मृजे, पुगन्त इत्येतच्छास्त्रत्रयी- यऋपदेक्पदप्रयोज्यविषयतात्रयवृत्यन्यतमत्वे स्वव्यापकतावच्छेदकीभूतं यदुपधाया इति पुगन्तेति शास्त्रद्वयीयोद्देश्यताख्यविषयताद्वयवृत्यन्य- तरत्वं तद्व्यापकत्वस्यैव सत्वेन स्वव्यापकतावच्छेदकाव्यापकत्वरूपसंवन्धेन वैशिष्ट्याभावेनोर्ऋदितिशास्त्रस्यैरारामपवादत्वानापत्तेरिति चेन्न । निरुक्तद्वितीयसंवन्धघटकव्यापकतावच्छेदकपदेन पुगन्तेतिशास्त्रीयेक्पद- प्रयोज्यविषयता उपधायाश्चेतिशास्त्रीया ऋपदप्रयोज्यविषयता चेत्ये- तद्द्वयावृत्तिनो ग्रहणेन सर्वत्र दोषाभावात् । न चैवमपि यचिभमिति शास्त्रेण बाध्यसामान्यचिन्तया सुप्तिङन्तं स्वादिष्वितिशा- स्त्रद्वयबाधानापत्तिस्तदुभयशास्त्रीयविषयताद्वयवृत्त्यन्यतरत्वस्य स्वव्यापक- तावच्छेदकस्वादिष्वितिशास्त्रीयविषयतावृत्तितद्व्यक्तित्वव्यापकत्वात् । त- था च राजन्य इत्यत्र सुप्तिङन्तमितिपदत्वेन नलोपापत्तिरिति वा- च्यम् । स्वव्यापकतावच्छेदकाव्यापकत्वेतिद्वितीयसंबन्धस्थाने स्वव्यापकत्व स्वाश्रयविषयताव्याप्यत्विषयतावृत्तित्वोभयसंबन्धेन स्वव्याप- कतावच्छेदकविशिष्टाभिन्नत्वमित्यस्य निवेशेनोक्तान्यतरत्वस्य स्वव्याप- कतावच्छेदकस्वादिष्वितिशास्त्रीयविषयतावृत्तितद्व्यक्तित्वव्यापकत्वेपि त- त्तद्व्यक्तित्वाश्रयविषयताभाववति रामइति सुबन्ते सुप्तिङन्तमितिशास्त्री-

न्तोत्तरपदकः समास इति चेत्। न । अनया परिभाषया स्त्रीप्रत्ययसमभिव्याहारे तद्रहिते दृष्टानां प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टे ऽपि पर्याप्तत्वमतिदिश्यत इत्याशयात् ॥ ७२ ॥

---

तद्वारणयोर्निर्दलत्वापत्त्या भाष्यविरोधः स्पष्ट एव । विशिष्टेपीति । स्वान्तत्व स्वविशिष्टादित्वोभयसंबन्धेन स्त्रीप्रत्ययविशिष्टे स्वविशिष्टवर्तिनः प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकधर्मस्यानयातिदेश इत्याशयः । उभयत्र वैशिष्ट्यं च स्वाव्यवहितपूर्वत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटकत्वोभयसंबन्धेनेत्येकरूपमेव । तेनायस्कर्णीत्यत्र पाककर्णेतिसूत्रेणायस्कर्णशब्दान्ङीष्यपि कर्णशब्दस्य ङीष्विशिष्टत्वेन तद्वृत्त्यर्थवत्त्वस्य कर्णीशब्दे स्वविशिष्टेतिदेशेनातः कृकमीतिसत्वसिद्धिः । अत एव दर्शनीयमानिनीत्यादौ क्यङ्मानिनोश्चेति पुंवद्भाव एतस्याः प्रयोजनमित्युक्तं भाष्ये । अन्यथात्र गतिकारकेतिपरिभाषया ङीबुत्पत्तेः प्राक् समासे दर्शनीयामानिन्शब्दान्ङीपि मानिनीशब्दस्योत्तरपदत्वाभावात्तदसंगतिः स्यादिति बोध्यम् । यतो यो विहितस्तदादेरेव तेन ग्रहणमिति नियमे तु न मानमिति स्पष्टं स्वाङ्गाच्चेत इत्यत्र शेखरे । न च विशेषरूपेण प्रातिपदिकग्रहणे परिभाषाप्रवृत्तेः पूर्वमुक्तत्वेन बहुव्रीहित्वस्यापि तद्विशेषरूपत्वाच्छङ्काया अनुत्थितिरिति वाच्यम् । विशेषरूपपदेन प्रातिपदिकत्वव्याप्यस्यानुपूर्वीरूपस्य कुम्भशब्दत्वादेरेव ज्ञापकसाजात्याद् ग्रहणमित्याशयेन शङ्कायाः सुवचत्वात् । के चित्त्वतः कृकमीत्यत्र विष्वग्देवयोर्लोहितादिडाज्भ्य इत्यादिषु कुम्भश्च कुम्भी चेत्यादिविग्रहेण पुमान्स्त्रियेत्येकशेषकल्पनात् कुम्भीदेवीलोहिन्यादिशब्देष्वपि तत्तत्कार्यप्रवृत्त्येष्टसिद्धेः कुमारश्रमणादिभिरित्यत्र कृतपुंवत्ककुमारीशब्दस्यैव निर्देशेन तत्सार्थक्योपपत्तेर्विशेषरूपेण ग्रहणे ऽस्याः प्रवृत्तौ न किंचित्फलम्। न चातः कृकमीत्यादौ कुम्भशब्दस्य शब्दपरतया पुमान्स्त्रियेत्यस्याप्रवृत्तिः । अत एव शक्तिलाङ्गलेत्यत्र घटघटीत्येकशेषाभावः संगच्छतइति वाच्यम् । प्रकृतिवदनुकरणमित्यतिदेशेन कुम्भी-

नन्वेवं यूनः पश्येत्यत्रेव युवतीः पश्येत्यत्रापि श्वयुवेति संप्रसारणं स्यादत आह ॥

## विभक्तौ लिङ्गविशिष्टाग्रहणम् ॥ ७३ ॥

स्पष्टा चेयं युवोरनाकावित्यत्र भाष्ये । घटघटीग्रहणेन लिङ्गविशिष्टपरिभाषाया अनित्यत्वात्तन्मूलैषेत्यन्ये ॥ ७३ ॥

---

शब्दस्य स्त्रीवाचकत्वातिदेशेन पुमान्स्त्रियेत्यस्य प्रवृत्तेः सुवचत्वात्, घटघटीत्यादौ तु प्रकृतिवदनुकरणमित्यस्यानित्यत्वान्नैकशेषः । एवं सामान्यग्रहणेपि नास्याः फलं रमागौरीत्यादौ स्वाद्युत्पत्तिस्तु ङ्याब्ग्रहणादेव भविष्यति । ङ्याबन्तात्क्विबादेस्त्वनभिधानमेव । अत एव सूत्रकृन्मते प्राचांष्फतद्धित इत्यत्र तद्धितग्रहणं चरितार्थं, अन्यथा ष्फान्तस्यानयैव प्रातिपदिकपदेन ग्रहणसिद्धेस्तद्वैयर्थ्यापत्तिरिति वदन्ति ॥ ७२ ॥

युवतीः पश्येति । सुपथीत्यादावात्वादेरुपलक्षणमिदम् । युवतीरित्यत्र त्वन्नन्तानां श्वादीनामित्यर्थकरणेन संप्रसारणव्यावृत्तेर्भाष्यकृतोक्तत्वात् । केचित्तु सूत्रे श्वन्नादीनां तदन्तपरत्वेनान एकदेशान्वयासंभवादन इत्यस्यान्नन्तश्वन्नाद्यन्ते लक्षणायां तात्पर्यग्राहकत्वेनान्नन्तयुवन्शब्दत्वस्य तथात्वेन तदतिदेशे बाधकाभाव इति वदन्ति । विभक्ताविति । विषयसप्तमी । तेन विभक्त्युद्देश्यके तन्निमित्तके सर्वविधविभक्तिसंबन्धिनि कार्यइत्यर्थः । तेन शुन्येत्यादौ गौरादिङीषो यणि कृते उदात्तयणो हल्पूर्वादिति विभक्त्युदात्तत्वस्यानया शुनीत्यत्र श्वन्शब्दत्वमादाय नगोश्वन्सावर्णेति न निषेधोस्य विभक्त्युद्देश्यकत्वेन तत्संबन्धित्वात् । एवं सख्यावित्यत्र णिद्वद्भावोपि नेति बोध्यम् । न च चित्रगवीणामित्यत्र कुमतिचेतिणत्वानापत्तिः । विभक्त्युद्देश्यककार्यत्वेनानया निषेधेन ङ्यन्ते समासत्वानतिदेशात् ।

ननु तस्यापत्यम् इत्येकवचननपुंसकाभ्यां निर्देशाद् गार्ग्यो गार्ग्याविस्याद्ययुक्तमत आह ॥

## सूत्रे लिङ्गवचनमतन्त्रम् ॥७४॥

अर्द्धर्चपुंसकम् इति नपुंसकग्रहणमस्या ज्ञापकम् । नित्यनपुंसकत्वार्थं तु न तदित्यन्यत्र निरूपितम् ॥

---

कुमतिचेत्यस्य कवर्गवदुत्तरपदघटितसमासप्रकृतिकविभक्तिनकारे एव प्रवृत्तेरत एव पूर्वपापानांविपाक इत्यत्र षष्ठ्या आक्रोशइत्यलुकि विभक्तिनकारस्य णत्वं नेति वाच्यम् । अट्कुप्वाङिति णत्वेनेष्टसिद्धेः । दीर्घाह्नीत्यत्राहन्निति रुत्वस्यापि पदत्वद्वारा विभक्तिनिमित्तकत्वेन विभक्तिसंबन्धिकार्यत्वादनयाहन्शब्दत्वातिदेशासंभवान्न रुत्वमिति दिक् ॥ ७३ ॥

अयुक्तमिति । न च द्वित्वबहुत्वयोः पुंस्त्वस्त्रीत्वयोश्चाविवक्षायामेकवचननपुंसकलिङ्गप्रयुक्तकार्यप्रवृत्तिरत एव स्तोकादिशब्देभ्यो नपुंसकैकवचनामादिसिद्धिरिति न प्रकृतप्रयोगासंगतिरिति वाच्यम् । समवायानूपक्षिमत्स्यमृगानित्यादिप्रयोगोपलक्षणत्वेनैतस्य मृगं हन्ति मार्गिक इत्यादिप्रयोगानुपपत्तिरित्याशयेनादोषात् । अतन्त्रमिति । असति यत्ने अविवक्षितमित्यर्थः । अत एव पदास्वैरीत्यादौ नपुंसकनिर्देशेन सिद्धौ बाह्या इति स्त्रीलिंगनिर्देशो विवक्षार्थस्तेन पुन्नपुंसकयोः क्यवभावसिद्धिः ॥ न च तस्याविवक्षितत्वे मृगानित्यादौ नत्वाद्यनापत्तिः, तस्माच्छस इत्यस्य पुंस्त्वे विवाक्षिते इत्यर्थादिति वाच्यम् । पक्षिमत्स्येत्यादिशब्दैः पुंस्त्वादेर्विवक्षितत्वेपि तद्धितवाच्यतावच्छेदककुक्षावविवक्षितमित्यर्थेनादोषादित्यन्यत्र विस्तरः । नित्यनपुंसकत्वार्थं तु नेति । पूर्वापराधरोत्तरार्धमित्येकयोगेन सिद्धे पृथग्योगकरणेनैव तत्सिद्ध्या नपुंसकग्रहणवैयर्थ्यस्य सूपपादत्वादिति भावः । वस्तुतस्तु तन्न युक्तमित्यत्र प्रमाणमाह । अन्यत्रेति । एओङ् एच इतिसूत्रयोरर्धे एकारोर्धे ओकार इति भाष्ये समांशवाचिनोपि पुंस्त्वाभिधानेन नित्यनपुंसकत्वस्याप्रामाणिकतया न तद्ग्रहणार्थं नपुंसकग्रहणमिति तत्रैव सूत्रे प्रतिपादितमित्यर्थः । के चि-

धान्यपलालन्यायेन नान्तरीयकतया तयोरुपादानमिति तस्यापत्यमित्यत्र भाष्ये स्पष्टम् ॥ अत एवाकडारसूत्रे एकेति चरितार्थमित्यन्यत्र विस्तरः ॥ ७४ ॥

नन्वु भृशादिभ्यो भुव्यच्वेरित्यादौ विधीयमानः क्यङ् क्व दिवा भृशा भवन्तीत्यत्रापि स्यादत आह ॥

**नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ॥ ७५ ॥**

नञ्युक्तमिवयुक्तं च यत्किंचिद् दृश्यते तत्र तस्मा-

---

त्तु भाष्ये ऽर्धशब्दः खण्डत्वेन वस्तुतः समांशवाचक इति; न तद्विरोध इति प्राहुः । नान्तरीयकतयेति । नान्तरीयकत्वं चाविनाभावः । विनार्थकादंतराशब्दात् गहादित्वाच्छप्रत्यये नञ्तत्पुरुषे भाष्यप्रयोगान्न-लोपाभावे स्वार्थिके कन्प्रत्यये नांतरीयकशब्दः साधुरिति कैयटे स्पष्ट-म् । एतेन नान्तरीयकतया यस्य यस्योपादानं तस्य सर्वस्याविवक्षितत्वमि-ति सूचितम् । तेन तदधीते इत्यादौ कालस्य, तत्करोतितदाचष्टइत्यादौ कालकारकयोश्चैवमेवाविवक्षा सिध्यतीति भावः ॥ भाष्ये स्पष्टमिति । तत्र हि यथा कश्चिद्धान्यार्थी शालिकलापं सतुषं सपलालमाहरति ना-न्तरीयकत्वात् । स यावदादेयं तावदादाय तुषपलालान्युत्सृजाति । तथा कश्चिन्मत्स्यार्थी मत्स्यान् सशल्कान् सकण्टकानाहराति नान्तरीय-यकत्वात् । स यावदादेयं तावदादाय शल्ककण्टकान्युत्सृजति । एवमिहा-पि नान्तरीयकत्वात्पुल्लिङ्गेन निर्देशः क्रियते एकवचनान्तेन च । नह्यत्र निर्देशस्तन्त्रमिति । लिङ्गस्यातन्त्रत्वे ज्ञापकमुक्त्वा वचनांशे तदाह । अत एवेति । प्राचीनमते तु एकदेशानुमत्या सर्वांशइदमेव ज्ञापकमिति दिक् ॥ ७४ ॥

नञिवयुक्तमिति । नञ्युक्तमिवयुक्तमित्यर्थः । योगश्चायं पूर्वसूत्र-

ननु तस्यापत्यम् इत्येकवचननपुंसकाभ्यां निर्देशाद् गार्ग्यो गार्ग्याविस्याद्ययुक्तमत आह ॥

## सूत्रे लिङ्गवचनमतन्त्रम् ॥७४॥

अर्द्धन्नपुंसकम् इति नपुंसकग्रहणमस्या ज्ञापकम् । नित्यनपुंसकत्वार्थं तु न तादित्यन्यत्र निरूपितम् ॥

---

कुमतिचेत्यस्य कवर्गवदुत्तरपदघटितसमासप्रकृतिकविभक्तिनकारे एव प्रवृत्तेरत एव पूर्वपापानांविपाक इत्यत्र षष्ठया आक्रोशइत्यलुकि विभक्तिनकारस्य णत्वं नेति वाच्यम् । अट्कुप्वाङिति णत्वेनेष्टसिद्धेः । दीर्घाह्नीत्यत्राहन्निति रुत्वस्यापि पदत्वद्वारा विभक्तिनिमित्तकत्वेन विभक्तिसंबन्धिकार्यत्वादनयाहन्शब्दत्वातिदेशासंभवान्न रुत्वमिति दिक् ॥ ७३ ॥

अयुक्तमिति । न च द्वित्ववहुत्वयोः पुंस्त्वस्त्रीत्वयोश्चाविवक्षायामेकवचननपुंसकलिङ्गप्रयुक्तकार्यप्रवृत्तिरत एव स्तोकादिशब्देभ्यो नपुंसकैकवचनामादिसिद्धिरिति न प्रकृतप्रयोगासंगतिरिति वाच्यम् । समवायानूपक्षिमत्स्यमृगानित्यादिप्रयोगोपलक्षणत्वेनैतस्य मृगं हन्ति मार्गिक इत्यादिप्रयोगानुपपत्तिरित्याशयेनादोषात् । अतन्त्रमिति । असति यत्ने अविवक्षितमित्यर्थः । अत एव पदास्वैरीत्यादौ नपुंसकनिर्देशेन सिद्धौ बाह्या इति स्त्रीलिंगनिर्देशो विवक्षार्थस्तेन पुन्नपुंसकयोः क्यवभावासिद्धिः ॥ न च तस्याविवक्षितत्वे मृगानित्यादौ नत्वाद्यनापत्तिः, तस्माच्छस इत्यस्य पुंस्त्वे विवाक्षिते इत्यर्थादिति वाच्यम् । पक्षिमत्स्येत्यादिशब्दैः पुंस्त्वादेर्विवक्षितत्वेपि तद्धितवाच्यतावच्छेदककुक्षावविवक्षितमित्यर्थेनादोषादित्यन्यत्र विस्तरः । नित्यनपुंसकत्वार्थं तु नेति । पूर्वापराधरोत्तरार्धमित्येकयोगेन सिद्धे पृथग्योगकरणेनैव तत्सिद्ध्या नपुंसकग्रहणवैयर्थ्यस्य सूपपादत्वादिति भावः । वस्तुतस्तु तन्न युक्तमित्यत्र प्रमाणमाह । अन्यत्रेति । एओङ् एच इतिसूत्रयोरर्धे एकारोर्धे ओकार इति भाष्ये समांशवाचिनोपि पुंस्त्वाभिधानेन नित्यनपुंसकत्वस्याप्रामाणिकतया न तद्ग्रहणार्थं नपुंसकग्रहणमिति तत्रैव सूत्रे प्रतिपादितमित्यर्थः । के चि-

धान्यपलालन्यायेन नान्तरीयकतया तयोरुपादानमिति तस्यापत्यमित्यत्र भाष्ये स्पष्टम् ॥ अत एवाकडारसूत्रे एकेति चरितार्थमित्यन्यत्र विस्तरः ॥ ७४ ॥

ननु भृशादिभ्यो भुव्यच्वेरित्यादौ विधीयमानः क्यङ् क्व दिवा भृशा भवन्तीत्यत्रापि स्यादत आह ॥

## नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ॥ ७५ ॥

नञ्युक्तमिवयुक्तं च यत्किंचिद् दृश्यते तत्र तस्मा-

---

तु भाष्ये ऽर्धशब्दः खण्डत्वेन वस्तुतः समांशवाचक इति न तद्विरोध इति प्राहुः । नान्तरीयकतयेति । नान्तरीयकत्वं चाविनाभावः । विनार्थकादंतराशब्दात् गहादित्वाच्छप्रत्यये नञ्तत्पुरुषे भाष्यप्रयोगान्न-लोपाभावे स्वार्थिके कन्प्रत्यये नांतरीयकशब्दः साधुरिति कैयटे स्पष्ट-म् । एतेन नान्तरीयकतया यस्य यस्योपादानं तस्य सर्वस्याविवक्षितत्वामि-ति सूचितम् । तेन तदधीते इत्यादौ कालस्य, तत्करोतितदाचष्टइत्यादौ कालकारकयोश्चैवमेवाविवक्षा सिध्यतीति भावः ॥ भाष्ये स्पष्टमिति । तत्र हि यथा कश्चिद्धान्यार्थी शालिकलापं सतुषं सपलालमाहराति ना-न्तरीयकत्वात् । स यावदादेयं तावदादाय तुषपलालान्युत्सृजाति । तथा कश्चिन्मत्स्यार्थी मत्स्यान् सशल्कान् सकण्टकानाहराति नान्तरीय-यकत्वात् । स यावदादेयं तावदादाय शल्ककण्टकान्युत्सृजति । एवमिहा-पि नान्तरीयकत्वात्पुल्लिङ्गेन निर्देशः क्रियते एकवचनान्तेन च । नह्यत्र निर्देशस्तन्त्रमिति । लिङ्गस्यातन्त्रत्वे ज्ञापकमुक्त्वा वचनांशे तदाह । अत एवेति । प्राचीनमते तु एकदेशानुमत्या सर्वांशइदमेव ज्ञापकमिति दिक् ॥ ७४ ॥

नञिवयुक्तमिति । नञ्युक्तमिवयुक्तमित्यर्थः । योगश्चाद्ये पूर्वस्वरू-

द् भिन्ने तत्सदृशे ऽधिकरणे द्रव्ये कार्यं विज्ञायते हि यतस्तथार्थगतिरस्ति। न ह्यब्राह्मणमानयेत्युक्ते लोष्टमानीय कृती भवति। अतश्च्व्यन्तभिन्ने च्व्यन्तसदृशे ऽभूततद्भावविषये क्यङिति नोक्तदोषः॥ ओषधेश्च विभक्तावप्रथमायामित्यादौ विभक्तिग्रहणाद्येतन्न्यायसिद्धार्थानुवाद एव। एतेन विभक्तावित्याद्यस्यानित्यत्वे ज्ञापकमिति वदन्तः परास्ताः।अनित्यत्वे भाष्यसंमतफलाभावात्। अत एवाकर्त्तरि च इति सूत्रे कारकग्रहणं भाष्ये प्रत्याख्यातमिति बोध्यम्॥ स्पष्टा चेयं भृशादिभ्य इति

---

पो द्वितीये परत्वरूपः स्वघटितसमासघटकत्वरूपस्तूभयसाधारणः। तथाच नञ उत्तरं तद्घटितसमासघटक, मिवशब्दात्पूर्वं तद्घटितसमासघटकं च पदं स्वार्थभिन्नस्वार्थसदृशबोधकं, नञादिपदं च तदर्थे तात्पर्यग्राहकं निपातानां द्योतकत्वादितिभावः। अत एव परिभाषायान्नञिवावन्यसदृशाधिकरणे वर्तेते इति नोक्तम्। नचैवं तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिता इत्यभियुक्तवचने सादृश्यभेदयोः पृथग्नञर्थत्वकथनमनुपपन्नमिति वाच्यम्। भेदविशिष्टे सादृश्ये सादृश्यविशिष्टे भेदे च न ञो वृत्तिकल्पनायां प्रधानाप्रधानभावमूलकेन भेदेन तथाकथने बाधकाभावात्। भेदविशिष्टसादृश्यबोधकत्वं नञो मृगो न भीम इत्यादौ वेदे प्रसिद्धम्। तथार्थगतिरिति। लोके ईदृशस्थले तद्भिन्नतत्सदृशरूपार्थावगतिरित्यर्थः। तथा च लोकसिद्धो ऽयमर्थ इति सिद्धम्। अब्राह्मणश्चन्द्रइवेत्यादि लोके उदाहरणम्। अच्वेरिति तत्रतस्येवेति शास्त्रे उदाहरणम्। विभक्तावित्यादि। आदिना ऽकर्तरीत्यस्य संग्रहः। अनित्यत्वे इति। नन्वनित्यत्वे फलमसूर्यंपश्यानि मुखानीत्यादि संभवत्येवेत्यत आह। भाष्येति। शब्दशक्तिस्वभावात्तादृशस्थले सादृश्यप्रतीतिर्लोके प्रसिद्धा न तु तत्र ज्ञापकापेक्षेति भावः। अत एवेति। अनित्य-

सूत्रे भाष्ये॥ अत्रान्यसदृशेत्युक्त्या सादृश्यस्य भेदाघटितत्वं सूचयति । निरूपितं चैतन्मञ्जूषायाम् ॥ ७५ ॥

ननु व्याघ्री कच्छपीत्यादौ सुबन्तेन समासात्ततोऽप्यन्तरङ्गत्वाद् टाप्यदन्तत्वाभावाज्जातिलक्षणो ङीष् न स्यादत आह ॥

## गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः।७६।

उपपदमिति सूत्रे ऽतिङ्ग्रहणेन कुगति इत्यत्र तदपकर्षणेनाऽतिङन्तश्च समास इत्यर्थात्तयोः सूत्रयोः सुप्सुपेत्य-

---

त्वस्य भाष्यानभिमतत्वादेवेत्यर्थः । सूचयतीति । तथाच भेदसादृश्ययोः पार्थक्येन नञर्थत्वं पूर्वोक्तं स्वरसत उपपद्यतइति भावः ॥ ७५ ॥

ननु व्याघ्रीति । ननूपसंजनिष्यमाणन्यायेनैव सिद्धे इदमवतरणदानमयुक्तं वस्तुतस्तु सांकूटिनमित्यत्र संशब्देन समासात्पूर्वं स्वार्थेणि संकौटिनमिति स्यात् एवं माषवापिणीत्यत्र माषशब्देन समासात्पूर्वं ङीपि उत्तरपदप्रातिपदिकान्तनकाराभावाद् गर्गभगिनीत्यत्रेव णत्वानापत्तिरत आहेत्यवतरणं दातुं युक्तमिति राघवेन्द्राचार्याः । तन्न मनोरमम् । उक्तन्यायेन हि भविष्यदपवादविषयातिरिक्तत्वेन संकोचात्केवलाद् घ्रादिशब्दाद् टाबापत्तेर्दुर्वारत्वात् । न च तेन न्यायेन भविष्यदपवादविषयघटकातिरिक्तत्वेन संकोच आवश्यको ऽत एव क्रीतात्करणपूर्वादिति चरितार्थ,मन्यथा क्रीतशब्दस्य भविष्यदपवादविषयाश्वक्रीतातिरिक्तत्वेन तेन टाब्विधायकशास्त्रे संकोचेपि टापो दुर्वारत्वापत्तिः मम तु क्रीतशब्दस्य भविष्यदपवादविषयघटकत्वेनानेन न्यायेन टाब्बाधसिद्धिरिति वाच्यम् । तथा सति अजाक्रीतीत्यादौ अजशब्दस्य भविष्यदपवादविषयघटकत्वेन टाबनापत्तेः । नचानेन न्यायेन भविष्यदपवादविषयान्तातिरिक्तत्वेन संकोचान्नाजा-

स्य निवृत्त्यैकदेशानुमत्या कारकांशे च सिद्धेयं तेनाश्वक्रीती सिद्धा । अन्यथा पूर्वं टाप्यदन्तत्वाभावात् क्रीतात्करणपूर्वात् इति ङीष् न स्यात् ॥ अस्या अनित्यत्वात् क्वचित्सुबुत्पत्त्यनन्तरमपि समासो यथा सा हि तस्य धनक्रीतेति । अन्ये त्वनित्यत्वे न मानं तत्राजादित्त्वाद् टाबित्याहुः ॥ अत एव कुम्भकार इत्यादौ षष्ठीसमासो

---

क्रीतीत्यादौ दोष इति वाच्यम् । घन इव कपिला घनकपिलेत्यादावन्यतोङीषिति ङीषापत्तेः । कपिलशब्दस्य तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरेणानुदात्तान्तत्वेन भविष्यदपवादविषयान्तत्वात् । सिद्धान्ते भविष्यदपवादविषयातिरिक्तत्वेन संकोचे तु घनकपिलेत्यस्य भविष्यदपवादविषयत्वेपि कपिलशब्दस्य तदभावेन टाप् सिद्ध्यति । अन्तरङ्गानपिविधीन्बहिरङ्गोलुग्बाधतइतिपरिभाषया टावपेक्षया लुक्प्रयोजकसमासस्य प्राबल्यं तु नेत्यकृतव्यूहपरिभाषान्ते प्राक् प्रदर्शितमेव । सुबुत्पत्तेरिति । सुप्पदं प्रत्ययमात्रोपलक्षणम् । अत एव सांकूटिनसिद्धिः । सुप्सुपेत्यस्य निवृत्येति । अत्र च तृतीयान्तस्य निवृत्तिर्न तु प्रथमान्तस्य । एकदेशानुमत्येति । कारकांशे स्थालीपुलाकन्यायेनेयं सिद्धेति भावः । वस्तुतस्तु कारकांशे ज्ञापकं क्रीतात्करणपूर्वादिति बोध्यम् । तदेवानुवदति । अन्यथेति । एतस्या अभावइत्यर्थः । ङीष् न स्यादिति । तथा च सूत्रं व्यर्थं स्यादित्यत्र शेषो बोध्यः । अनित्यत्वादिति । एतच्च कर्तृकरणे कृताबहुलमिति सूत्रस्थाद् बहुलग्रहणाल्लभ्यतइत्युपपदमतिङिति सूत्रे कैयटः।केचित्तु अम्बाम्बेत्यनेनेणन्तात्परस्य षत्वविधानमत्र मान,मन्यथागोष्ठेत्यत्र सुबुत्पत्तेः पूर्वं समासे पदत्वाभावेन सात्पदाद्योरितिषत्वनिषेधाप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेत्याहुः । तन्न । दधिसेचावित्यत्र सुबुत्पत्तेः पूर्वं समासे षत्वनिषेधाप्राप्त्या सिद्धान्तेपि पदादादिरिति पञ्चमीसमासस्यावश्यकत्वेन गोष्ठ इत्यत्र षत्वनिषेधप्राप्त्याम्बाम्बगोभूमिसव्यापद्वित्रीतीणन्तात् षत्वविधानस्यावश्यकत्वात् । तदाह । न मानमिति । फलाभावमप्याह । तत्रेति । गोचेत्यत्र तु नपदान्तेत्यत्र पदपदस्य पदत्वयो-

ऽपि सुबुत्पत्तेः पूर्वमेव । षष्ठीसमासाभावे चोपपदसमासकृत एकार्थीभाव इति न तत्र वाक्यमिति भाष्ये स्पष्टम्।तत्र हि षष्ठीसमासादुपपदसमासो विप्रतिषेधेनेति वार्त्तिकम्। अथवा विभाषाषष्ठीसमासो यदा न षष्ठीसमासस्तदोपपदसमास इति तत्प्रत्याख्यानं च । यद्यप्युपपदसमासस्यान्तरङ्गत्वाभिप्रायकं न वा षष्ठीसमासाभावादुपपदसमास इति वार्त्तिककृतोक्तं तथापि तदुभयप्रत्याख्यानपरमथवेत्यादि भाष्यं परिभाषायां सामान्यतः कारकोपादानेन कारकविभक्त्यन्तेन कृद्भिः समासमात्रस्य सुबुत्पत्तेः पूर्वमेव लाभात् । एतेनैषा कारकतद्विशेषयोरुपादान-

---

ग्यपरत्वेन स्थानिवत्त्वानिषेधासिद्धिरिति तत्रैव शेखरे स्पष्टम् । अत एवेति । परिभाषास्वीकारादेवेत्यर्थः । षष्ठीसमासोपीति । परिभाषायां सामान्यतः कारकोपादानेनास्यापि तत्त्वादिति भावः । अत्र प्रमाणं दर्शयति । षष्ठीत्यादि । यदि सुबन्तेन षष्ठीसमासस्तदोपपदसमास एवान्तरङ्गत्वाद् भविष्यतीति भाष्यविरोधः स्पष्ट एव । समासमात्रस्येति । ननु सामान्यतः कारकोपादानएवैतत्प्रवृत्तौ प्राप्तापन्नेचेत्यनेन द्वितीयया अ इति च्छित्वा अकारविधानं भाष्योक्तं व्यर्थं तत्र टाबुत्पत्तेः पूर्वं समासेन सिद्धेः। एवमपां स्रष्ट्रीत्यत्र षष्ठीतिप्राप्तसमासस्य तृजकाभ्यामिति निषेधो लिङ्गविशिष्टपरिभाषयेति ङ्याप्सूत्रे भाष्ये उक्तं तत्राप्यनया पूर्वं समासप्राप्त्या निषेधसिद्धिरिति लिङ्गविशिष्टपरिभाषया समाधानं भाष्योक्तमसंगतमिति चेन्न। आद्ये टाबुत्पत्तेः पूर्वं समासेपि तदुत्तरं प्राप्तटापो ऽकारविधानमावश्यकमिति न भाष्यविरोधः । द्वितीयेपि ङीपः पूर्वं तृजन्तत्वेन समासनिषेधेपि ङीबुत्तरं तृजन्तत्वाभावात्स न स्यादित्याशङ्क्य लिङ्गविशिष्टपरिभाषया समाधानं सुस्थमेवेत्यदोषात् । परास्तमिति । परे तु कारकतद्विशेषोपादाने एवैषा परिभाषा प्रवर्तते ।

एवेति परास्तम् । अस्या विध्येकवाक्यत्वाभावेन विप्रतिषेधादिशास्त्रवत् कार्यव्यवस्थापकत्वेनोपादान एवेत्यर्थालाभाच्च ॥ ७६ ॥

ननूगिदचामित्यत्र धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियमेनाधातोरेव नुमि सिद्धेऽधातुग्रहणं व्यर्थमत आह ।

---

०

अस्या विध्येकवाक्यत्वाभावेपि यत्र कारकत्वव्याप्यधर्मावच्छिन्नबोधकं पदं तत्र शास्त्रे सुपेति नानुवर्तते इत्यस्य वक्तुं शक्यत्वात् । न च षष्ठीतिसूत्रे कारकतद्विशेषोपादानाभावेनैतदप्रवृत्त्याऽथवा विभाषाषष्ठीसमासो यदा न षष्ठीसमासस्तदोपपदसमास इतिभाष्यासङ्गतिरिति वाच्यम् । विभाषाधिकारस्य पाक्षिकैकार्थीभावबोधकतयैकार्थीभावे समासस्य नित्यत्वेन षष्ठीसमासाभावपक्षे एकार्थीभावस्याभावेनोपपदसमासाप्राप्त्यास्य भाष्यस्यैकदेश्युक्तित्वेन तद्विरोधस्याकिंचित्करत्वात् । अत एव पारेमध्येषष्ठ्यावेत्यादौ वाग्रहणं चरितार्थम् । किं चैवं षष्ठीतिसूत्रे एतत्परिभाषया सुपेत्यस्य निवृत्तौ राजपुरुष इत्यादावपि सुबुत्पत्तेः प्राक् समासापत्तिः । वाक्यभेदेनार्थद्वयकरणे तु न मानम् । किं चाथवेतिभाष्यस्योभयप्रत्याख्यानपरत्वमप्ययुक्तम् । प्रत्याख्यानस्थलेऽथवेति शब्दस्य भाष्ये क्वाप्यदर्शनात् । तत्तर्हिवक्तव्यमित्यादिशब्दैरेव प्रत्याख्यानस्य भाष्यकृच्छैलीसिद्धत्वात् । भाष्यकृता तु 'षष्ठीसमासादुपपदसमासोविप्रतिषेधेन' 'अथवा विभाषाषष्ठीसमासो यदा नषष्ठीसमासस्तदोपपदसमास' इतिवार्तिककृदुक्तप्रकारद्वयस्य 'न वा षष्ठीसमासाभावादुपपदसमास' इत्यनेनोपपदसमासस्यांतरङ्गत्वोपपादनेन प्रत्याख्यानं कृतम् । अत एव भाष्ये नवा षष्ठीसमासाभावादित्युत्तरं गतिकारकेत्युपात्तम् । तव तु षष्ठीतिसूत्रेप्यनया सुपेत्यस्य निवृत्त्योपपदसमासमात्रस्यान्तरङ्गत्वप्रतिपादनमसंगतमेव स्यादित्याहुः ॥ ७६ ॥

अधातोरेव नुमि सिद्धे किमर्थमधातुग्रहणमिति । न चाञ्चतेरुचेन्नलोपिन एवेति नियमस्वीकारादधातुग्रहणं धातोर्नुमभावाय सार्थकमिति वा-

## सांप्रतिकाभावे भूतपूर्वगतिः॥७७॥

तत्तद्वचनसामर्थ्यन्यायसिद्धेयम् । तत्सामर्थ्यादधातुभूतपूर्वस्यापीत्यर्थेन गोमत्यतेः क्विपि गोमानित्यादौ नुम्सिद्धिः । नामीत्यादिसूत्रेषु भाष्ये स्पष्टा ॥ ७७ ॥

## बहुव्रीहौ तद्गुणसंविज्ञानमपि ॥ ७८ ॥

अपिनातद्गुणसंविज्ञानम् ॥ तेषां गुणानामवयवपदार्थानां संविज्ञानं विशेष्यान्वयित्वमिति तदर्थः ॥ यत्र समवायसंबन्धेन संबन्ध्यन्यपदार्थस्तत्र प्रायस्तद्गुण-

---

र्थयम् । नकारविशिष्टस्यांचतेर्नुमि सत्यपि वर्णग्रहणे जातिग्रहणाद् द्वयोरपि नकारयोरनुस्वारे विशेषाभावाद् नपुंसकस्य झलच इत्यतो झलच इत्यस्यानुवृत्त्याचः परो यो झल् तदंतस्य नुमित्यर्थाच्चांचतौ नकारविशिष्टे नुमोप्राप्त्या त्वदुक्तनियमासंभवेनाधातुग्रहणवैयर्थ्यस्य सूपपादत्वात् । सांप्रतिकाभावे इति । कार्यप्रवृत्तिवेलायां तत्तन्निमित्तस्यासंनिधानेपि तत्तद्वचनसामर्थ्याद् भूतपूर्वमपि तादृशं धर्ममादाय तत्तत्कार्यं प्रवर्तनीयमित्यर्थः । नामीत्यादिसूत्रेषु भाष्ये इति । तत्र हि आमीतिन्यासे रामआमित्यादौ नित्यत्वाद्दीर्घेपि ह्रस्वान्तान्नुडित्येतद्वचनसामर्थ्यादनया नुडित्युक्तम् ॥ ७७ ॥

समवायेति । संयोगस्याप्युपलक्षणम् । तथा च संयोगसमवायान्यतरसंबन्धेन संबन्धीत्यर्थः । संयोगेन संबंधित्वं नागयज्ञोपवीतिनमानयेत्यत्र । समवायेन संबंधित्वं लंबकर्णमानयेत्यत्र । प्रायग्रहणाद् नागयज्ञोपवीतिनं भोजयेत्यादौ संयोगेन तत्वेपि न तद्गुणत्वम् । अन्यत्रेति । चित्रगुर्दृष्टसागर इत्यादावित्यर्थः । अत्र प्रायग्रहणफलं तु यदि चित्रगुरित्यस्यैव गवानयनेपि तात्पर्यं तदा तद्गुणत्वमेवेति बोध्यम् । केचित्तु यत्र वार्ते-

संविज्ञानम् । अन्यत्र प्रायो ऽन्यत् ॥ लम्बकर्णचित्रगू उदाहरणे । सर्वादीनि जक्षित्यादय इति चोदाहरणे । सर्वनामसंज्ञासूत्रे भाष्ये स्पष्टा ॥ ७८ ॥

---

पदार्थविशिष्टस्यान्यपदार्थस्य समभिव्याहृतपदार्थे वैशिष्ट्यं तत्र तद्गुणत्वं, यत्र तदुपलक्षितस्य वैशिष्ट्यं तत्रातद्गुणत्वमित्यनुगतं तल्लक्षणमाहुः । अन्ये तु यत्र समभिव्याहृतपदार्थे वर्तिपदार्थानां धर्मिपारतंत्र्येणान्वयस्तत्र तद्गुणत्वमेवान्यत्रातद्गुणत्वमेवेत्याहुः । परे तु यत्र समभिव्याहृतपदार्थे ऽन्यपदार्थान्वयो वर्तिपदार्थान्वयनांतरीयकस्तत्रतद्गुणत्वं यथा लंबकर्णमानयेत्यत्रान्यपदार्थानयनं कर्णं विना न संभवतीति । नागयज्ञोपवीतिनमानय भोजयेत्यादौ तु समभिव्याहृतक्रियान्वयो ऽन्यपदार्थस्य नागयज्ञोपवीतसंबंधं विना ऽपि संभवतीत्यतद्गुणत्वम् । एवं चित्रगुरित्यत्र गवानयनतात्पर्येऽपि सर्वत्रातद्गुणत्वं बोध्यम् । सर्वादीनीत्यत्रादिशब्दोवयवत्वविशिष्टपूर्वत्वविशिष्टवाचक इत्यन्यपदार्थगणान्वयः समभिव्याहृतपदार्थे सर्वशब्दान्वयनांतरीयक इति तत्र तद्गुणत्वमेव । जक्षित्यादय इत्यत्र चादिशब्दः केवलपूर्वत्वाविशिष्टवाचीति न तत्र तद्गुणत्वम् । आदिशब्दस्यावयवत्वविशिष्टवाचकत्वं कुत्रेत्यत्र तु व्याख्यानमेव शरणम् । यथा हालिसर्वेषामित्यत्र सुहृद्दर्शनेन सर्वादीत्यत्रादिशब्दोवयवत्वविशिष्टवाचीति ज्ञायत इत्याहुः । अपरे त्वत्र चित्रगुलंबकर्णादौ तद्गुणत्वातद्गुणत्वविचारस्य काकदंतपरीक्षावन्निष्फलत्वेन तदनुरोधेन तद्गुणत्वादिलक्षणस्यानुपयोगात् केवलमाद्यादिशब्दघटितबहुव्रीहिस्थले एव तत्फलसत्वेन तदनुरोधात् यत्र वर्तिपदार्थानामन्यपदार्थेन सह घटकघटितभावस्तत्र तद्गुणत्वमन्यत्रान्यादित्येवं तल्लक्षणं बोध्यम् । भाष्ये सर्वादीत्यादौ तद्गुणसंविज्ञानो ऽतद्गुणसंविज्ञानो वेति संदेहस्तु अत्रादिशब्दः शुद्धपूर्वत्वविशिष्टवाची उतावयवत्वविशिष्टपूर्वत्वाविशिष्टवाचीत्येतत्संदेहप्रयुक्त एव । तथा च सर्वादीत्यत्रादिशब्दस्यावयवत्वादिविशिष्टवाचकतया तद्गुणसंविज्ञान एव । जक्षित्यादय इत्यत्र तदभावेनातद्गुणसंविज्ञान एवेत्याहुः ॥ ७८ ॥

ननु वदः सुपि क्यप् च इति चेनानुकृष्टस्य यतो भुवो भावे इत्यत्राप्यनुवृत्तिः स्यादत आह ॥

# चानुकृष्टं नोत्तरत्र ॥ ७९ ॥

णमुल्यनुवर्तमाने ऽव्यये ऽयथाभिप्रेतेति सूत्रे पुनर्णमुल्ग्रहणमस्या ज्ञापकम् । अन्यथा क्त्वा चेति वदेत् । तद्धि उत्तरत्रोभयोः सम्बन्धार्थम् । उदाहरणानि स्फुटानि ॥ इदमनित्यम् । अत एव तृतीया च होरि-

---

चानुकृष्टमिति । चकारेणानुवर्तमानं परत्र न संबध्यते इति परिभाषार्थः । इदमनित्यमिति । केचित्तु अनित्यत्वे न मानं नापि फलम् । अत्र शास्त्रे चानुवृत्तिनिवृत्तिसूचकौ चकारौ स्तस्तत्राव्यवहितसूत्रे च शब्दो ऽनुवृत्तिसूचको व्यवहितसूत्रे तु निवृत्तिसूचकः । चानुकृष्टमित्यत्र चशब्दो निवृत्तिसूचकपरस्तथा च निवृत्तिसूचकशब्देनानुवर्तमानमुत्तरत्र न संबध्यतइत्यर्थस्तेन तृतीया च होरित्यत्र चशब्दस्य कर्मणिद्वितीयेत्येतदव्यवहितसूत्रास्थितत्वेन निवृत्तिसूचकत्वाभावाचेनानुवर्तमानाद्द्वितीयापदस्यान्तरान्तरेणेत्यत्र संबंधे बाधकाभावः । तथा चैतत्परिभाषाविषयत्वाभाववतामनुवृत्तिसूचकानामव्यवहितोत्तरसूत्रवर्त्तिनां सर्वचकाराणां प्रत्याख्याने च न भाष्यविरोधोऽपि । एवमव्यवहितपूर्वसूत्रस्थस्य खोन्यतरस्यामित्यस्य चोत्तरसूत्रे द्विगोष्ठंश्चेत्यत्र चेनानुकृष्टस्योत्तरत्रानुवृत्तावपि तस्य निवर्तकत्वाभावेनोक्तपरिभाषा ऽविषयतया भाष्यविरोधाभावः स्फुट एवेति प्राहुः । अन्ये त्वव्यवहितोत्तरसूत्रघटकचशब्दः समुच्चायको विप्रकृष्टसूत्रस्थश्चानुकर्षकस्तत्र समुच्चायकचशब्देन समुच्चितशब्दः स्वरितत्वादिनोत्तरत्र गन्तुमर्हति, चानुकृष्टस्तु तावत्सूत्रगमनयोग्यस्वरितत्वाभावेपि चकारबलादाकृष्टस्तत्र कार्यं संपादयन्नप्युत्तरत्राकर्षकाभावान्न संबध्यते । गन्तुमसमर्थस्य परेण बलान्नयने एव कृषधातोर्लोके प्रयोगः । अत एव परिभाषायां चानुवृत्तमित्यनुक्त्या चानुकृष्टमित्युक्तम् । भाष्यकृता च चसमुच्चि-

त्यत्र चानुकृष्टाया अपि द्वितीयाया अन्तरान्तरेण इत्यत्र सम्बन्धः। लुटि च क्लृप इति सूत्रस्थेनानुवृत्त्यर्थकसकलच-कारप्रत्याख्यानेन विरुद्धेयम्। व्याख्यानादेवानुवृत्ति-निवृत्त्योर्निर्वाह इति तदाशयः॥ कुलिजाल्लुक्खौ च इति सूत्रस्थभाष्यविरुद्धा च। तत्र हि द्विगोः ष्ठंश्च इति सूत्रात् ष्ठनस्तत्र चेनाप्यनुकृष्टस्य खो ऽन्यतरस्यामित्य-स्य चानुवृत्तिं स्वीकृत्य लुक्खौ चेति भाष्ये प्रत्याख्या-तम्॥ ७९॥

नन्वनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जना-देर्व्यञ्जनान्ताच्च न प्राप्नोतीत्यत आह॥

## स्वरविधौ व्यञ्जनमविद्यमा-नवत्॥ ८०॥

स्वरोद्देश्यके विधावित्यर्थः॥ नोत्तरपदे ऽनुदात्तादाव-

---

तस्यापि स्वरितत्वादेवोत्तरत्रानुवृत्तिर्वाच्या तथा च स्वरितत्वादेवान्यत्र-हितोत्तरसूत्रेपि तस्यानुवृत्तिसंभवेन वैयर्थ्यादेव समुच्चायकचकाराणां प्रत्याख्यानं कृतमिति नोक्तदोषावकाशः। अनेकसूत्रविप्रकृष्टस्य चका-रस्य तु तावदनुवृत्तिप्रयोजकमेवानुवर्तमानपदेषु स्वरितत्वमस्तीत्यत्र ता-त्पर्यग्रहार्थमावश्यकतया भगवता न तत्प्रत्याख्यानं कृतमिति प्राहुः॥ ७९॥

स्वरोद्देश्यके विधाविति। स्वरत्वव्याप्यधर्मघटितधर्मनिमित्तताके विधावित्यर्थः। व्याप्यत्वानिवेशे तु नोत्तरपद इत्यस्य स्वरोद्देश्यकत्वा-

पृथिवीरुद्रपूषमन्थिषु इति सूत्रे पृथिव्यादिपर्युदासो ऽस्या ज्ञापकः । अन्यथा पृथिव्यादीनामनुदात्तादित्वाभावादप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव ॥ धर्मिग्राहकमानादेव च स्वरोद्देश्यकविधिविषयमिदम् । अत एव शतुरनुमो नद्यजादी अचः कर्तृयकीत्यादावजादी अच इत्यादेश्चारितार्थ्यम् । अत एव राजवतीत्यादौ नलोपस्यासिद्धत्वादन्वतीशब्दत्वादन्तो ऽवत्या इति स्वरो न उदश्वित्वानित्यत्र ह्रस्वनुड्भ्यामिति मतुबुदात्तत्वं च नेत्याकरः ॥ स्पष्टं चेदं समासस्येति सूत्रे भाष्ये ॥ उच्चैरुदात्त इति सूत्रे कैयटस्त्वयमनावश्यकी समभिव्याहृताज्गुपरागेण हलो ऽप्युदात्ता-

---

भावात्तदसंगतिः स्यात् । अत एवेति । स्वरोद्देश्यकेतिनिवेशादेवेत्यर्थः । चारितार्थ्यमिति । तद्धि तुदद्भ्यामित्यत्र भ्याम उदात्तत्ववारणार्थम् । सामान्यतो ऽविद्यमानवद्भावे त्वत्रापि विभक्तेरजादित्वादजादीतिविशेषणं व्यर्थमेव स्यादिति भावः । न चाभ्यस्तानामादिरित्याद्युदात्तके दधतीत्यत्रोदात्तत्ववारणायात्रांतोदात्तादित्यनुवृत्तेरावश्यकतया ऽस्यापि स्वरोद्देश्यकत्वेनोक्ताजादिग्रहणवैयर्थ्यं तदवस्थमेवेति वाच्यम् । स्वरत्वव्याप्यधर्मघटितधर्मावच्छिन्नविषयतायाः प्रतिबन्धकं व्यंजनं न भवतीति परिभाषार्थस्वीकारेण तुदद्भ्यामित्यत्र दांते ऽन्तोदात्तत्वबुद्धिप्रतिबंधकत्वाभावेपि व्यंजनस्य भ्यामादावजादित्वबुद्ध्यप्रतिबंधकत्वे मानाभावात् । एवं ह्रस्वनुड्भ्यामित्यत्रांतोदात्तादित्यनुवृत्त्या तस्य स्वरोद्देश्यकत्वेपि उदश्विच्छब्दे ह्रस्वांतत्वबुद्धेरसंभवो बोध्यः । कैयटस्त्विति । नन्वनुदात्तत्वादीनामज्धर्मत्वादजुपरागेण व्यंजनेषु तद्धर्मावभासेपि वस्तुतस्तदभावेनानुदात्तादिशब्दैस्तेषां ग्रहणे मानाभाव इत्ययुक्तो ऽयं कैयट इत्यत आह । भाष्येपीति । तत्र ह्युदात्तत्वादीनामज्धर्मत्वं व्यञ्जनेषु तु

त्यत्र चानुकृष्टाया अपि द्वितीयाया अन्तरान्तरेण इत्यत्र सम्बन्धः। लुटि च क्लृप इति सूत्रस्थेनानुवृत्त्यर्थकसकलचकारप्रत्याख्यानेन विरुद्धेयम्। व्याख्यानादेवानुवृत्तिनिवृत्योर्निर्वाह इति तदाशयः॥ कुलिजाल्लुक्खौ च इति सूत्रस्थभाष्यविरुद्धा च। तत्र हि द्विगोः ष्ठंश्च इति सूत्रात् ष्ठनस्तत्र चेनाप्यनुकृष्टस्य खो ऽन्यतरस्यामित्यस्य चानुवृत्तिं स्वीकृत्य लुक्खौ चेति भाष्ये प्रत्याख्यातम्॥ ७९॥

नन्वनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोतीत्यत आह॥

## स्वरविधौ व्यञ्जनमविद्यमानवत्॥ ८०॥

स्वरोद्देश्यके विधावित्यर्थः॥ नोत्तरपदेऽनुदात्तादाव-

---

तस्यापि स्वरितत्वादेवोत्तरत्रानुवृत्तिर्वाच्या तथा च स्वरितत्वादेवाव्यवहितोत्तरसूत्रेपि तस्यानुवृत्तिसंभवेन वैयर्थ्यादेव समुच्चायकचकाराणां प्रत्याख्यानं कृतमिति नोक्तदोषावकाशः। अनेकसूत्रविप्रकृष्टस्य चकारस्य तु तावदनुवृत्तिप्रयोजकमेवानुवर्तमानपदेषु स्वरितत्वमस्तीत्यत्र तात्पर्यग्रहार्थमावश्यकतया भगवता न तत्प्रत्याख्यानं कृतमिति प्राहुः॥ ७९॥

स्वरोद्देश्यके विधाविति। स्वरत्वव्याप्यधर्मघटितधर्मानिमित्तताके विधावित्यर्थः। व्याप्यत्वानिवेशे तु नोत्तरपद इत्यस्य स्वरोद्देश्यकत्वा-

पृथिवीरुद्रपूषमन्थिषु इति सूत्रे पृथिव्यादिपर्युदासो ऽस्या ज्ञापकः । अन्यथा पृथिव्यादीनामनुदात्तादित्वाभावादप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव ॥ धर्मिग्राहकमानादेव च स्वरोद्देश्यकविधिविषयमिदम् । अत एव शतुरनुमो नद्यजादी अचः कर्तृयकीत्यादावजादी अच इत्यादेश्चारितार्थ्यम् । अत एव राजवतीत्यादौ नलोपस्यासिद्धत्वादन्वतीशब्दत्वादन्तो ऽवत्या इति स्वरो न उदश्वित्वानित्यत्र ह्रस्वनुड्भ्यामिति मतुबुदात्तत्वं च नेत्याकरः ॥ स्पष्टं चेदं समासस्येति सूत्रे भाष्ये ॥ उच्चैरुदात्त इति सूत्रे कैयटस्त्वथमनावश्यकी समभिव्याहृताज्झुपरागेण हलो ऽप्युदात्ता-

---

भावात्तदसंगतिः स्यात् । अत एवेति । स्वरोद्देश्यकेतिनिवेशादेवेत्यर्थः । चारितार्थ्यमिति । तद्धि तुदद्भ्यामित्यत्र भ्याम उदात्तत्ववारणार्थम् । सामान्यतो ऽविद्यमानवद्भावे त्वत्रापि विभक्तेरजादित्वादजादीतिविशेषणं व्यर्थमेव स्यादिति भावः । न चाभ्यस्तानामादिरित्याद्युदात्तके दधतीत्यत्रोदात्तत्ववारणायात्रांतोदात्तादित्यनुवृत्तेरावश्यकतया ऽस्यापि स्वरोद्देश्यकत्वेनोक्ताजादिग्रहणवैयर्थ्यं तदवस्थमेवेति वाच्यम् । स्वरत्वव्याप्यधर्मघटितधर्मावच्छिन्नविषयतायाः प्रतिबन्धकं व्यंजनं न भवतीति परिभाषार्थस्वीकारेण तुदद्भ्यामित्यत्र दांते ऽन्तोदात्तत्वबुद्धिप्रतिबंधकत्वाभावेपि व्यंजनस्य भ्यामादावजादित्वबुद्ध्यप्रतिबंधकत्वे मानाभावात् । एवं ह्रस्वनुड्भ्यामित्यत्रांतोदात्तादित्यनुवृत्या तस्य स्वरोद्देश्यकत्वेपि उदश्विच्छब्दे ह्रस्वांतत्वबुद्धेरसंभवो बोध्यः । कैयटस्त्विति । नन्वनुदात्तत्वादीनामज्धर्मत्वादजुपरागेण व्यंजनेषु तद्धर्मावभासेपि वस्तुतस्तदभावेनानुदात्तादिशब्दैस्तेषां ग्रहणे मानाभाव इत्ययुक्तो ऽयं कैयट इत्यत आह । भाष्येपीति । तत्र ह्युदात्तत्वादीनामज्धर्मत्वं व्यञ्जनेषु तु

दिवदवभासात्तदुपपत्तेरित्याह । तत्र भाष्ये ऽपि ध्वनितमेतत् ॥ ८० ॥

नन्वेवमपि राजदृषदित्यादौ समासस्येत्यन्तोदात्तत्वं षकारस्य न स्यादत आह ॥

## हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ॥ ८१ ॥

अस्याश्चं यतो ऽनाव इति सूत्रे नौप्रतिषेधो ज्ञापकः । नाव्यमित्यत्रादिर्नकारो न स्वरयोग्यो यश्चाकारस्तद्योग्यो नासावांदिरिति स प्रतिषेधो ऽनर्थकः ॥ न चादिरेव नकार उदात्तगुणविशिष्टान्तरतमाज्रूपो ऽस्त्विति वाच्यम् । तथा सति निमित्तभूतद्व्यच्कत्वस्य विनाशादुपजीव्य-

---

सामीप्यात्तदवभासमात्रमिति व्यवस्थाप्य व्यंजनादेर्व्यंजनांताच्च स्वरोद्देश्यकस्यानुदात्तादेरान्नित्यादेः प्रवृत्तये न कश्चिदुपायः प्रदर्शितस्तेनावभासमानानुदात्तत्वादिधर्मवतां व्यंजनानामप्यनुदात्तादिशब्दैर्ग्रहणमिति भाष्यकारस्सूचयतीत्याशयः ॥ ८० ॥

एवमिति । स्वरोद्देश्यकविधावेवाविद्यमानवद्भावस्वीकारे इत्यर्थः । न स्यादिति । किं तु दकारस्य स्यादित्यव्याप्त्यतिव्याप्ती दूषणे इति भावः । हल्स्वरप्राप्ताविति । हलः स्थाने स्वरप्राप्तावित्यर्थः । उदात्तगुणविशिष्टेति । इदं गुणिविधानपक्षे बोध्यम् । द्व्यच्कत्वस्य विनाशादिति । न च संनिपातपरिभाषायां स्वप्रवृत्तेः प्राक् स्वानिमित्तभूतो यः संनिपातस्तद्विघातकस्य स्वातिरिक्तस्य स्वयमनिमित्तमितितदर्थनिरूपणावसरे स्वातिरिक्तेति विशेषणात्स्वस्य तद्विघातकत्वेपि नोक्तपरिभाषाविरोध इत्यस्य वक्ष्यमाणत्वेनेदमसंगतमितिवाच्यम् । तत्र स्वातिरिक्तेति

विरोधेनाद्युदात्तत्वाप्राप्तेरित्यन्यत्र विस्तरः ॥ स्पष्टा चेयं समासस्येति सूत्रे भाष्ये ॥ ८१ ॥

ननु पूरणगुणेति निषेधस्तव्यत्यपि स्यात् । दिव औत् इत्यौत्वं दिवेः क्विप्यपि स्यात् । तथा यतो ऽनाव इति स्वरो ण्यत्यपि स्यात् । ऋदृशो ऽङि गुण इति चङ्यपि स्यात्, अत आह ॥

## निरनुबन्धकग्रहणे न सानुबन्धकस्य ॥ ८२ ॥

## तदनुबन्धकग्रहणे नातदनुबन्धकस्य ॥ ८३ ॥

वामदेवाड् ड्यड्ड्यौ इति सूत्रे ड्यड्ड्यतोर्डित्वमनयोर्ज्ञापकम् । तद्धि ययतोश्चातदर्थे इत्यत्र तयोरग्रहणार्थम् ॥ नञः परस्य ययदन्तस्योत्तरपदस्यान्त उदात्त इति तदर्थः ।

---

विशेषणस्य स्ववैयर्थ्यमूलकत्त्वेना ऽऽव्यमित्यत्र यतोनाव इति सूत्रस्य चारितार्थ्येन वैयर्थ्यमूलकताद्दशार्थस्येहानाश्रयणेन संनिपातपरिभाषाप्रवृत्तेः सूपपादत्वादिति दिक् ॥ ८१ ॥

चङ्यपि स्यादिनि । ननु ऋद्दशोश्चङ्परत्त्वाभावादिदमसंगतमिति चेन्न । ऋदृशोरितिसूत्रादङीत्यनुवर्तमाने श्वयतेर इत्यकारादेशश्चङ्यपि स्यादित्यर्थेनादोषात् । श्वयतेश्च विभाषाधेट्श्व्योर्जॄस्तंभुइतिसूत्राभ्यां चङ्ङोर्विधानात् । ज्ञापकमिति । तद्धि डित्वं टिलोपार्थं तच्च यस्येतिलोपेनैव सिद्धमिति व्यर्थं सञ्ज्ञापकमिति भावः । अन्ययपूर्वेति । तत्पुरुषे-

एवं चावामदेऽन्ये ऽव्ययपूर्वपदप्रकृतिस्वर एव भवति ॥ तन्मात्रानुबन्धकग्रहणे स चान्यश्चानुबन्धो यस्य तद्ग्रहणं नेत्यन्त्यार्थः ॥ एते च प्रत्ययाप्रत्ययसाधारणे, दिव औत् इत्यादौ संचारितत्वात्। वर्णग्रहणे चानयोरप्रवृत्तिरिति स्पष्टमौङआप इत्यत्र भाष्ये। येनानुबन्धेन सानुबन्धकत्वं द्व्यनुबन्धकत्वादि वा तदनुच्चारण एवैषा धर्मिग्राहकमानात्, तेन जश्शसोरित्यत्र नैषेति निरनुबन्धकत्वात्तद्धितशस एवात्र ग्रहणं स्यादिति न शङ्क्यम्। एवमन्त्यान्यतरानुबन्धोच्चारण एव। तेन वनो र चेत्यादौ ङ्वनिप्क्वनिपोर्ग्रहणसिद्धिः। एकानुबन्धकग्रहणे संभवतीति त्वर्थो न भाष्यादिसंमत इत्यन्यत्र विस्तरः ॥ ८२ ॥ ॥ ८३ ॥

---

तुल्यार्थैतिसूत्रेणेति भावः। दिवऔदित्यादाविति। तत्र हि दिव औत्वे धातुप्रतिषेधइतिवार्तिकं प्रथमपरिभाषया प्रत्याख्यातम्। दिवुधातुरुदित्त्वात्सानुबंधकः। प्रातिपदिकं त्वव्युत्पन्नत्वान्निरनुबन्धकमिति तदाशयः। अप्रवृत्तिरिति। अतएवाधीते इत्यत्रेङः सानुबंधकत्त्वेपि सवर्णदीर्घसिद्धिः। औङ आप इत्यत्र भाष्ये इति। तत्र हि निरनुबंधकपरिभाषया प्रथमाद्विवचनस्यैव ग्रहणं प्राप्नोतीत्याशंक्य नैषा वर्णग्रहणेषु प्रवर्तते इत्युक्तम्। नशंक्यमिति। न चात्रोक्तरीत्या परिभाषाप्रवृत्त्यभावे कुतो न तद्धितशसो ग्रहणमिति वाच्यम्। साहचर्यपरिभाषया तद्ग्रहणसिद्धेः। भाष्यादिसंमत इति। अत एवाणिनुण इत्यत्र घिनुणो ऽग्रहणमन्यथा एकानुबंधकस्यासंभवेनोक्तपरिभाषाया अप्रवृत्तौ घिनुणो ग्रहणंदुर्वारं स्यादिति भावः। एवं झय इत्यत्र मतुशब्देन ङ्मतुपो ग्रहणसिद्धिरिति दिक्। परे तूक्तपरिभाषाद्वयस्थाने स्वाघटकानुबंधाघटितस्य ग्रहणे स्वाघटकानुबंधघटितस्य ग्रहणं नेति एका परिभाषा स्वीकार्या। स्वपदेन बोधको ग्राह्यः। वनोरचेत्यादौ तु असंभवादेव सर्वेषां ग्रहण-

ननु कुटीर इत्यादौ स्वार्थिकत्वात्स्वार्थिकानां प्रकृतितो लिङ्गवचनानुवृत्तेर्न्यायप्राप्तत्वात्पुंस्त्वानुपपत्तिरपूकल्पमित्यत्र नपुंसकैकवचनयोरनुपपत्तिश्चेत्यत आह ॥

क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते ॥ ८४ ॥

णचः स्त्रियामितिसूत्रे स्त्रियामित्युक्तिरस्या ज्ञापिका । अन्यथा कर्मव्यतिहारे णच् स्त्रियाम् इति स्त्रियामेव विधानात्किं तेन ॥ स्पष्टा चेयं बहुज्विधायके भाष्ये ॥ ८४ ॥

---

सिद्धिः। एवं च जश्शसोरित्यादौ धर्मिग्राहकमानादिनार्थविशेषकल्पनापि नेति महालाघवमित्याहुः ॥ ८२ ॥ ॥ ८३ ॥ कुटीर इति। ह्रस्वाकुटीत्यर्थे कुटीशमीति रप्रत्ययः । प्रकृतित इति। षष्ठ्यन्तादाद्यादित्वात्तासिः । स्वार्थिकानां प्रकृत्यर्थबोधकत्वेन प्रत्ययत्वात् प्रकृत्यर्थलिङ्गसंख्याबोधकत्वस्य न्याय्यतया सर्वत्र स्वार्थिकेन तद्भानस्यावश्यकत्वेपि तयोरर्थयोः खण्डशक्तिस्वीकारेण सति गमके एतत्त्यागाल्लोकसिद्धत्वाच्च तत्तल्लिंगभानमित्यत उक्तं क्वचिदिति। न च स्वार्थिकानां प्रकृत्यर्थेतरार्थाबोधकत्वेन कथमेकार्थीभावसंभव इति वाच्यम्। स्वार्थिकानां प्रमेयत्वावच्छिन्नबोधकत्वस्य कल्पनेन तेन सह प्रकृत्यर्थानामभेदान्वयस्वीकारेण तत्वस्य सुवचत्वात् । शब्दस्यापि शाब्दबोधे भाननैयत्येन तत्तत्प्रत्ययरूपार्थस्य प्रकृत्यर्थेतरत्त्वेनैकार्थीभावस्य सूपपादत्वात् । क्विबन्तलिडादिशब्देष्वनेकपदघटितत्वाभावेप्येकार्थीभावोपपत्तये स्ववृत्तित्व-स्वपर्याप्तशक्तिज्ञानप्रयोज्यज्ञानविषयत्वोभयसंबंधेन पदविशिष्टशक्तिपर्याप्त्यधिकरणत्वरूपैकार्थीभावस्याभ्युपेयतया स्वार्थिकप्र-

ननु सुपथी नगरीति युवोरनाकाविति सूत्रभाष्योदाहृत इनः स्त्रियाम् इति कप्स्यादत आह ॥

## समासान्तविधिरनित्यः ॥८५॥

प्रतेरंश्वादयस्तत्पुरुषे इत्यन्तोदात्तत्वार्थांश्वादिषु राजऽशब्दपाठो ऽस्या ज्ञापकः। अन्यथा टचैवान्तोदात्तत्वे सिद्धे किं तेन ॥ द्वित्रिभ्यां पाद्दन्मूर्द्धसु इति स्वरविधायके भाष्ये स्पष्टेयम् ॥ ८५ ॥

---

त्यर्थांतेषु तत्त्सत्वेनादोषाच्चेति दिक् । ज्ञापकमाह । ण-च इति । बहुज्विधायके इति । तत्रत्येन तुशब्देनैवायमर्थो भाष्ये निरूपित इति बोध्यम् ॥८४॥ टचैवेति । ननु प्रतेरंश्वादय इत्यस्य प्रतेः परीभूतास्तत्पुरुषघटका अंतोदात्ता इत्यर्थात् टिलोपोत्तरमवशिष्टस्य जांतभागस्यैकदेशविकृतन्यायेन राजन्शब्दत्वेन सतिशिष्टतया रेफाकारस्योदात्तविधानाय सार्थक्यात्कथं वैयर्थ्यमिति वाच्यम् । प्रतेः परांश्वाद्युत्तरपदकस्य तत्पुरुषस्यान्त उदात्त इति तदर्थेनोक्तरेफाकारस्य स्वरप्राप्त्यभावात् । टचो नित्यत्वे तु प्रतिराजशब्दे चित्त्वादेवान्तोदात्तत्वसिद्धेस्तद्वैयर्थ्यस्य सूपपादत्वात् । नागेशनये ऽक्तपरिमाणत्वेन राजन्शब्दत्त्वस्य जान्ते तेन न्यायेनातिदेशासंभवाच्च । ननु राज्ञीं प्रतिगतः प्रतिराज्ञिरित्यत्रांतोदात्तत्वार्थांश्वादिषु राजन्शब्दपाठश्चरितार्थः । समासांतविधौ लिंगविशिष्टपरिभाषाया अनित्यत्त्वेन टचोप्राप्त्यान्तोदात्ताप्राप्तेः। न चात्र स्वरविधौ कर्तव्येपि लिङ्गविशिष्टपरिभाषाया अनित्यत्वमिति वाच्यम् । अस्याः स्वरविधौ संघातग्रहणे एव भाष्ये दोषकथनेनावयवग्रहणे ऽप्रवृत्तौ मानाभावादित्यरुचेराह । द्वित्रिभ्यामिति । तथा च द्वित्रिभ्यां पाद्दन्मूर्धंष्विति कृतसमासांतमूर्धशब्दपाठेन द्व्यादिभ्यः परस्य कृतसमासांतमूर्धशब्दस्य बहुव्रीहावेव सत्वेनार्थत एव तल्लाभाद् बहुव्रीहिग्रहणमस्यां मानम् । परिभाषासत्वे तु समासान्तस्यानित्यत्वेन द्विमूर्धाइत्यत्रोक्तस्वरप्रवृत्तये ऽकृ-

ननु शतानीत्यादौ नुमि कृते षट्संज्ञा प्राप्नोति ततश्च लुक् स्यात्तथोपादास्तेत्यत्रात्त्वे कृते स्थाघ्वोरिच्च इतीत्त्वं प्राप्नोत्यत आह ॥

## संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥ ८६ ॥

संनिपातो द्वयोः संबन्धस्तन्निमित्तो विधिस्तं सं-

---

तसमासान्तमूर्धशब्दपाठस्यावश्यकतया बहुव्रीहीतरसमासे एतदप्रवृत्तये बहुव्रीहिग्रहणं चरितार्थम् । के चित्तु ऋक्पूरब्धूःपथामित्यकृतसमासांतानिर्देशो ऽस्या ज्ञापक इत्याहुः । अन्ये तु राजस्वरे इत्यावर्त्य प्रतिराज्ञिरित्यत्रापि राजस्वरत्वेन प्रतेरंशवादय इत्यस्याप्रवृत्त्या मूलोक्तज्ञापकमपि युक्तमेवेत्याहुः । परे तु राजस्वरे इति पृथक्कोटिस्तेन राज्ञीकुमार इत्यत्र राजाचेति स्वरो न । ब्राह्मणकुमारयोर्लिंगविशिष्टपरिभाषाया अनित्यत्वात् राजब्राह्मणी राजकुमारीत्यत्रोक्तस्वरो नेत्यविशेषात् प्रतिराज्ञिरित्यत्रापि राजस्वरसत्त्वान्मूलोक्तज्ञापकसंगतिरित्याहुः ॥ ८५ ॥

लुक् स्यादिति । ननु ष्णान्ता इत्यत्रोपदेशे ष्णान्ता इत्यर्थेन नात्र दोष इति चेन्न । उपदेशे इत्यस्य नकारषकारयोरन्वये सापेक्षत्वेन समासासंभवादित्यादिदूषणस्य मनोरमायामुक्तत्वेन तेन वारणासंभवात् । अन्यार्थमावश्यिकयोक्तपरिभाषया निर्वाह उपदेशे इत्यपूर्वकथने गौरवेण तदनादरणाच्च । न च प्रियपञ्चान इत्यत्र लुगभावाय षड्भ्य इत्यत्र विहितविशेषणत्वस्वीकारान्नात्र लुक्प्राप्तिरिति वाच्यम् । षड्भ्यो विहितेत्यस्य जसादिनिरूपिततदाद्यभिन्नषड्भ्यः परेत्यर्थकत्वेनोक्तदोषतादवस्थ्यात् । न च विभक्तिसापेक्षत्वेन नुमः षट्संज्ञादृष्ट्या ऽसिद्धत्वेन तदप्राप्तिरिति वाच्यम् । संज्ञाशास्त्रस्य विधिनिमित्तानिमित्तकत्वेन लुगर्थसंज्ञाया अपि विभक्तिसापेक्षत्वेन नुमो बहिरङ्गत्वायोगात् । नुम्निमित्तविभक्तेर्विनाशोन्मुखत्वेनाकृतव्यूहपरिभाषया नुमभावस्तत्र न शं-

क्यः । लुको बहिरङ्गत्वाभावेन बहिरंगेणान्तरंगनिमित्तविनाशसंभावनाया असत्वेन तस्या नुम्प्रवृत्यभावसंभावनाप्रयोज्यत्वाभावेन च तत्प्रवृत्तेः सर्वथैवासंभवात् । उपजीव्येति । तथा चोपादास्तेत्यत्र एज्विषयत्वमुपजीव्य जायमानात्त्वस्य घुसंज्ञाद्वारा स्वोपजीव्यैज्विषयत्वविघातकस्थाध्वोरित्येतद्विहितसिज्धर्मिककित्वं प्रति निमित्तत्वे उपजीव्यविरोधः स्पष्ट एवेति तदप्रवृत्तिरिति भावः । एवं शतानीत्यत्रापि बोध्यम् । न चोपादास्तेत्यत्रानया ऽऽत्वोपजीव्यविघातककित्वस्याप्रवृत्तावपि इत्वस्याप्रवृत्तौ मानाभाव इति वाच्यम् । संनियोगशिष्टानामित्युत्तरपरिभाषया प्रधानीभूतकित्वस्याप्रवृत्या तत्सान्नियोगशिष्टत्वस्याप्रवृत्तिरित्याशयात् । इदमत्रावधेयम् । इकोयणचीत्यादिविधिशास्त्रैस्तादृशस्वविधेयघटितस्य साधुत्वमितरस्य तदर्थकस्यासाधुत्वं बोध्यते । तेनैकरूपेण सुधी उपास्य सध्युपास्येत्यादीनामसाधुत्वं सिध्यति। एवं गोशब्दस्य साधुत्वबोधनाद् गाव्यादीनामसाधुत्वं भवति। तथा च परिनिष्ठितस्यापि सुध्युपास्य इति विसर्गातस्यासाधुत्वापत्ति, रुदिते जुहोति अनुदिते जुहोतीतिवत् शास्त्रद्वयप्रामाण्यात्पर्यायापत्तिर्वा स्यादिति इकोयणचीत्यादीनां मदुत्तरप्रवृत्तिमता शास्त्रेण यस्य साधुत्वं बोध्यते तदपि साध्विति स्वोत्तरप्रवृत्तिमच्छास्त्रस्याभ्यनुज्ञादानमपि विधेयम् । तत्तच्छास्त्रैः साधुत्वविधानफलं चाष्टाध्यायीस्थसाधुत्वविधायकशास्त्रं साधुशब्दघटकेष्वेव प्रवर्तते इति नियमपरिरक्षणमेव । तेन गगरीशब्दघटकेकारादिषु इकोयणचीत्यादीनामप्रवृत्तिः सिध्यति । स्वोत्तरप्रवर्तमानशास्त्रांतरबोधिताऽसाधुत्वा ऽसमानाधिकरणं च साधुत्वं पुण्यजनकतावच्छेदकमिति वैयाकरणसमयः । एवं चानया तत्तच्छास्त्रस्याभ्यनुज्ञावाक्यीयस्वोत्तरप्रवृत्तिमत्पदार्थे मदीयसंनिपातविघातकातिरिक्तेनेति संकोचः क्रियते । तेन बुद्धावित्यत्राच्चघेरितिशास्त्रेण स्वसंनिपातविघातकटाब्निधेरभ्यनुज्ञादानाभावेन तदप्रवृत्तिसिद्धिः । अनित्यत्वविषये त्वेतत्परिभाषाप्रयोज्यसंकोचघटकस्वसंनिपातविघातकशास्त्रे तत्तच्छास्त्रातिरिक्तत्वेन संकोचः । यथा कष्टायेतिनिर्देशेनास्या अनित्यत्वेन ङेर्य इत्यस्याभ्यनुज्ञावाक्यघटकसंनिपातविघातकपदार्थे सुपिचेत्यतिरिक्तत्वेन संकोचाद् रामायेत्यत्र तस्य ङेर्य इत्येतत्संनिपातविघातकत्वेपि दीर्घसिद्धिः । माधवानुयायिनस्तु ङेर्य

इत्यस्याभ्यनुज्ञावाक्ये एतत्परिभाषाप्रयुक्तसंकोचे तत्तच्छास्त्रातिरिक्तत्वेन संकोचकरणापेक्षया ऽनित्यत्वविषये ऽभ्यनुज्ञावाक्ये संनिपातपरिभाषा-प्रयोज्यसंकोचाभाव एव क्रियते । तेन नामीतिसूत्रारम्भसामर्थ्येनैतस्या अनित्यत्वात् ह्रस्वनद्याप इत्यस्याभ्यनुज्ञावाक्ये संनिपातपरिभाषा-प्रयोज्यसंकोचाभावेनाविशेषात् रायोहलीत्यस्याप्यभ्यनुज्ञादानसत्वेन प्रराणामित्यत्रात्वसिद्धिः । ह्रस्वनद्याप इत्येतदभ्यनुज्ञावाक्ये संनिपातपरिभाषाप्रयुक्तसंकोचाभावादेव रामाणामित्यत्र परत्वात्सुपिचेतिदीर्घस्यैव प्रवृत्या नामीत्यस्याग्नीनामिन्दूनामित्यनकारान्तोदाहरणदानं भाष्यकृतः स्वरसत उपपद्यते । न च श्नान्नलोप इतिसूत्रस्थभाष्यविरोधेनेदृशप्रकारस्यायुक्तत्वम् । तत्र हि नान्नलोप इति न्यासे यज्ञानां यत्नानामित्यत्र लोपमाशंक्य इदमिह संप्रधार्य लोपः क्रियतां दीर्घो वेत्युक्त्वा परत्वान्न लोप इत्युक्तम् । नामीत्यपेक्षया लोपस्य परत्वेपि सुपिचेत्यपेक्षया परत्त्वाभावेन त्वदुक्तरीत्या नुडुत्तरं सुपिचेत्यस्य प्रवृत्तौ वाधकाभावात् नलोपापेक्षयापि तस्य परत्वात्प्रवृत्यापत्या भाष्यविरोधः स्पष्ट एवेति वाच्यम् । सुपिचेत्यपेक्षया लोपस्य नित्यत्वेन प्रतिपदोक्तत्वेन च पूर्वं प्रवृत्तिरिति भाष्याशयकल्पनेनादोषादिति प्राहुः । तन्न । ह्रस्वोनपुंसकइत्युत्तरं सर्वत्रैव तत्संनिपातविघातकस्येकोचिविभक्ताविति नुमः प्राप्त्या तत्सूत्रारंभसामर्थ्येन संनिपातपरिभाषाया अनित्यत्वावश्यकत्वेनात्रापि ह्रस्वोनपुंसकइत्यस्याभ्यनुज्ञावाक्ये संकोचसामान्याभावे ह्रस्वविधायकशास्त्रेणेकोचीतिशास्त्रस्येव ह्रस्वस्य पितिकृतीतिशास्त्रस्याप्यभ्यनुज्ञाततया सुल्वादिशब्देषु तुगापत्तेर्दुर्वारत्वात् । मन्मते तु ह्रस्वोनपुंसकेत्यस्याभ्यनुज्ञावाक्ये इकोचीत्यतिरिक्तं यन्मत्संनिपातविघातकं तदतिरिक्तेनेति विशेषरूपेण संकोचात् ह्रस्वस्य पितीत्यस्याभ्यनुज्ञादानाभावेन तदप्रवृत्तेः । एवं ह्रस्वनद्यापइत्यस्याभ्यनुज्ञावाक्येपि नामीत्येतदतिरिक्तं यन्मत्संनिपातविघातकं तदतिरिक्तेनेत्येवंविशेषरूपेण संकोचात् नामीत्यस्याभ्यनुज्ञादानेपि रायोहलीत्यस्य तदभावेन तदप्रवृत्या प्रराणामित्यस्य साधुत्वाभावात् । एवं श्रीपायेत्यत्र सुपिचेत्यनेन ह्रस्वाकारनिमित्तकप्रवृत्तिकेन स्वोपजीव्यह्रस्वत्वविनाशेपि स्वनिमित्तभूतात्वनाशकातोधातोरित्येतत्प्रति अ-

भ्यनुज्ञादानाभावेनाकारलोपाप्रवृत्तिरिति बोध्यम् । सर्वं चेदं परिभाषायां कर्मण्यणित्यण्प्रत्ययांतताद्विघातशब्दाभिप्रायेण । अत एव मूले तं संनिपातं यो विहंति इत्युक्तम् । यदि तु लाघवात् भावघञंतो विघातशब्दस्तदा स्वोपजीव्यसंनिपातविघातः स्वेन न न्याय्य इत्यर्थस्तथा च तत्तच्छास्त्रविधेये स्वनिमित्तभूतसंनिपातविघातकातिरिक्तत्वेन स्वनिमित्तसंनिपातसंपादकशास्त्रीयसंनिपाताविघातकातिरिक्तत्वेन च संकोचो ऽनया क्रियते । स्वोपकारकनाशकर्तुरभ्यनुज्ञादाने स्वयं वा स्वोपकर्तुर्नाशकरणे उपजीव्याविरोधः स्पष्ट एव । तत्रान्यतरपक्षाश्रयणेनेष्टसिद्धावपि द्वितीयपक्षएवाकरसंमतः । अयं च स्वसंनिपातविघातकातिरिक्तत्वेन तत्तद्विधेये संकोचो यत्र स्वनिमित्तभूतसंनिपातविघातं विनापि तत्तच्छास्त्राणां चारितार्थ्यं संभवति तत्रैव, यथा यतोनाव इत्यत्रनौप्रतिषेधस्याव्यमित्यत्र चारितार्थ्यं संभवतीति तेन रूपेण संकोचात् गुणिविधानपक्षे नाव्यमित्यत्र नकारस्योदात्ताज्रूप आदेशो नेति प्राक् प्रदर्शितमेव । यत्र च स्वसंनिपातविघातं विना सुपिचेत्यादि तत्तच्छास्त्राणां चारितार्थ्यं न संभवति । तत्र नानेन रूपेण संकोचः किं तु स्वनिमित्तसंनिपातसंपादकशास्त्रीयसंनिपातविघातकातिरिक्तत्वेनैव संकोचः । तेन शतानीत्यत्र षट्संज्ञाद्वारा लुक्प्रयोजकीभूतनांतत्वसंपादकनुम्विधायकशास्त्रियसर्वनामस्थानप्रकृतिसंनिपातविघातकातिरिक्तत्वेन लुकि संकोचात् स न भवति । लुकि सति तु संबंधिनो नाशात्तद्विघातः स्पष्ट एव । कष्टायेतिनिर्देशेनास्या अनित्यत्वात्सुपिचेत्येतद्विधेये स्वनिमित्तसंनिपातसंपादकं ङेर्यइत्येतदतिरिक्तं यच्छास्त्रं तन्निमित्तभूतसंनिपाताविघातकातिरिक्तेतिविशेषणात् दीर्घस्य ङेर्य इत्येतत्संनिपातविघातकत्वेपि न क्षतिः । एवं नामीत्यत्रापि ह्रस्वनद्याप इत्येतदतिरिक्तं यत्स्वसंनिपातसंपादकं शास्त्रं तत्संनिपातविघातकातिरिक्तो दीर्घो भवतीत्यर्थान्न दोषः । अत्र पक्षेपि प्रराणामित्यत्रात्वस्य ह्रस्वनद्यापइत्येतत्संनिपातविघातकत्वेन रायोहलीत्यस्याप्रवृत्तिः । नामीत्यत्र सूत्रारम्भसामर्थ्येनोक्तरूपेण संकोचेप्यत्र तथा संकोचे मानाभावः । वस्तुतस्त्वयं द्वितीयप्रकार एव युक्तः । प्रथमकल्पे च वृद्धावित्यादावच्चघेरिति शास्त्रेण स्वनिमित्तसंनिपातविघातकटाब्विधेरुक्तन्यायसहकारेणाभ्यनुज्ञादानाभावेपि उद्देश्यतावच्छेदकावच्छेदेन विधेया-

निपातं यो विहान्ति तस्यानिमित्तम् ॥ उपजीव्यविरोधस्यायुक्तत्वमिति न्यायमूलैषा। अत एवात्र संनिपातशब्देन न पूर्वपरयोः संबन्ध एव किंतु विशेष्यविशेषणसंनिपातोऽपि गृह्यते। अत एव ग्रामणि कुलमित्यादौ नपुंसकह्रस्वत्वेऽपि पिति कृति इति तुग्न। प्रातिपदिकाजन्तत्वसंनिपातेन जातस्य ह्रस्वस्य तदन्त्रिघातकत्वात्। तुक्यजन्तत्वविघातः स्पष्ट एव॥ न चार्थाश्रयत्वेन ह्रस्वस्य बहिरङ्गतयाऽसिद्धत्वम्। अर्थकृतबहिरंगत्वानाश्रयणस्योक्तत्वात्। किं च षत्वतुकोरसिद्ध इत्येतद्बलात्कृति तुग्ग्रहणाच्च तुग्विधौ बहिरङ्गपरिभाषाया अप्रवृत्तेः॥ सर्वविधसंनिपातग्रहणादेव वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यादित्येतत्परिभाषादोषनिरूपणावसरे वार्तिककृतोक्तम्।

---

न्वयस्यौत्सर्गिकतया तदीयोद्देश्यतावच्छेदके संकोचं विना टाप्प्रवृत्तेर्दुर्वारत्वापत्तिः। किं चैवं नाव्यमित्यत्रोक्तदिशानया दोषवारणासंभवेन नौप्रतिषेधस्य हल्स्वरप्राप्ताविति परिभाषाज्ञापकत्वासंभवः। किं च पूर्वनिर्दिष्टपरिभाषार्थे एव ग्रन्थकर्तुः सामञ्जस्ये 'स्वप्रवृत्तेः प्राक्स्वनिमित्तभूत,इति वक्ष्यमाणग्रन्थेन परिभाषया अर्थान्तरोपवर्णनस्य नैरर्थक्यापत्तिः। किं च संज्ञाशास्त्रस्य साधुत्वविधायकत्वाभावेन पूर्वशास्त्राभ्यनुज्ञाया अभावात् कुम्भकारेभ्य इत्यादावनयान्यसंज्ञाया वारणपरभाष्यासंगतिः। किं च परिभाषायां विघातपदस्याणन्तत्वकल्पनया संनिपातलक्षणविधेस्तद्विघातकशास्त्रप्रवृत्तिनिरोधकत्वकल्पनेनाल्पदोषप्रयोजकोपजीव्यविरोधनिवारकत्वेऽपि महादोषप्रयोजकस्य स्वेन स्वोपजीव्यविघातकरणस्यान्याय्यत्वाबोधने शास्त्रकारस्याविवेकित्वापत्तिः। विघातपदे भावघञ्कल्पनेन संनिपातलक्षणविधेः स्वनिमित्तभूतसंनिपातविघातानिमित्तत्वसामान्याभावबोधकत्वकल्पने तु स्वरसत एवोभयं सिद्ध्यतीति दिक्। न्यायमूलैषेति। के

न हि प्रत्ययः पूर्वपरसंनिपातनिमित्तकः स एव च संनिपातशब्देन गृह्यत इति मत्वा न प्रत्ययः संनिपातनिमित्तक इति शङ्कायां तदभ्युपेत्यैवाङ्गसंज्ञा तर्ह्यनिमित्तं स्यादित्येकदेशिनोक्तमिति न तद्भाष्यविरोधः । किं चैवं शैवो गार्ग्यो वैनतेय इत्यादावप्यङ्गसंज्ञाया लोपनिमित्तत्वानापत्त्या वर्णाश्रय इत्यस्य वैयर्थ्यम् ॥ ग्रामणिकुलं ग्रामणिपुत्र इत्यादावुत्तरपदनिमित्तके ह्रस्वत्वे यथाकथंचिद् बहिरङ्गपरिभाषयापि वारणं संभवतीति कृन्मेजन्त इत्यत्र ह्रस्वस्य पिति इति सूत्रे चैकदेशिना तया परिभाषया दुर्वारितो भाष्ये । अत एव परिभाषाफलत्वेनेद-

---

मित्तु नातिसृतिसूत्रमत्र ज्ञापकम् । अन्यथा तिसृणामित्यत्र तत्परिभाषाभावे तिसृ नामित्यवस्थायामन्तरंगत्वान्ङीपि तद्वैयर्थ्यापत्तिः । एतत्सत्वे तु प्रकृतिप्रत्ययसंनिपातप्रयोज्यतिस्रादेशस्य ङीपं प्रत्यनिमित्तत्वेन तदप्रवृत्त्या सूत्रसार्थक्यं स्पष्टमेव । न च न षडितिनिषेधः शंक्यः । स्वस्रादिगणे तिसृचतसृपाठस्यानार्षत्वेन तेन तन्निषेधायोगात् । अत एव कृन्मेजन्तइतिसूत्रे भाष्ये तिसृश्चतसृइत्यत्र ङीपमाशंक्याचार्यप्रवृत्तिर्ज्ञापयति नतिसृचतसृभावे ङीब्भवतीति । यदयं नतिसृचतसृति नामिदीर्घत्वप्रतिषेधं शास्तीत्युक्तमिति । तन्न युक्तम् । तिस्रो ऽतिक्रान्तानामातितिसृणामित्यत्र ङीपि लिंगविशिष्टपरिभाषया ङीबंते उपसर्जनत्वात् गोस्त्रियोरिति ह्रस्वे नामीतिदीर्घे च प्राप्ते न्यूनसमुदायापेक्षत्वेनांतरंगत्वात्पूर्वं ह्रस्वे कृते प्राप्तदीर्घवारणायोक्तसूत्रस्यावश्यकत्वेन ज्ञापकत्वासंभवात् । परे तु अतितिस्री नामीति स्थिते नामीत्यस्यापि प्रतिपदोक्तत्वरूपान्तरंगत्वेन नित्यत्वेन चोभयोः समत्वात् । परत्वाद्दीर्घोत्तरं ह्रस्वे लक्ष्येलक्षणन्यायेन पुनर्दीर्घाप्राप्त्योक्तसूत्रस्य वैयर्थ्येन ज्ञापकत्वं सुस्थमेवेति प्राहुः । यत्तु वाचिह्रस्वश्चेतिन्यासेनैव श्रियां

श्रीणामित्यादौ ष्टरूपासिद्धौ वामि ङिति ह्रस्वश्चेति योगद्वयकरणमस्यां ज्ञापकम् । ज्ञापिते तु श्रीणामित्यत्राजादित्वमुपजीव्य जायमानेन नदीत्वेन नुड्द्वारा ऽजादित्वाविघातेनानया नुडप्राप्त्या वामीत्यस्यावश्यकत्वम् । तत्सत्वे तु नुड्विशिष्टे आम्त्वेन संनिपातविघाताभावः स्पष्ट एव । तत्र त्वजादित्वस्य वर्णत्वव्याप्यधर्मघटितत्वेन यदागमपरिभाषयाऽऽनयनाभावेन तद्विरोधः स्पष्ट एव । न च मतिश्चोमा चेति द्वन्द्वे ऽच्परत्वेन मतिशब्दस्य नदीत्वेन घित्वाभावात्पूर्वनिपातानापत्येदशन्यासस्य वक्तुमशक्यत्वामिति वाच्यम् । मतिश्च चित्रश्चेति द्वन्द्वे सिद्धांते ङित्परत्वेपि नदीत्वाभावार्थं प्रत्ययाक्षेपस्यावश्यकत्वेनोक्तदोषासंभवादिति प्राहु,स्तन्न । वापि ह्रस्वश्चेतिन्यासेन सिद्धेः सिद्धांतेप्युक्तयोगविभागवैयर्थ्येन तस्योक्तार्थज्ञापकत्वासंभवात् । ङिति ह्रस्वश्चेत्यत्र नित्यस्त्रीत्वसंबन्धो वामीत्यत्र चातिश्रियामतिश्रीणां ब्राह्मणानामिति सिद्ध्यर्थं तदसंबंध इति भाष्यसंमतासिद्धांतस्यासिद्ध्या तथाविधैकयोगस्य कर्तुमशक्यत्वाच्च । स्पष्टं चेदं तत्रैव सूत्रे शब्देन्दुशेखरटिप्पणे । अतएवेति । न्यायमूलत्वादेवेत्यर्थः । विशेष्यविशेषणसंनिपात इति । अभेद इत्यर्थः । अत एवेति । अभेदस्यापि ग्रहणादेवेत्यर्थः । एकदेशिनोक्तमिति । ननु विशेष्यविशेणषसंनिपातं बुध्वा प्रवृत्तं भाष्यं कुतो नैकदेशीति चेन्न । मानाभावात् । जरायाजरसित्यादिसूत्रारम्भसामर्थ्येनातिदेशिकसंनिपातविघाताभावमादाय तदप्रवृत्तिर्नेत्यत्रातिदेशपदेनैकदेशविकृतन्यायातिरिक्तस्य ग्रहणेनाङ्गत्वस्य विघाताभावादंगसंज्ञा तन्निमित्तमिति भाष्ये एवैकदेशयुक्तित्वकथनस्य युक्तत्वात् । अत एवाजरांसीत्यत्र जरसादेशोत्तरं नुम् भाष्ये उक्तः । अन्यथा ऽङ्गत्वस्यादेशेन विघातेन नुमोऽप्राप्त्या तदसंगतिः । अत एव च वर्णाश्रयः प्रत्यय इत्युक्तम् । अन्यथा शैव इत्यत्रापि अंगत्वविघातेन वर्णाश्रय इति कथनमयुक्तमेव स्यात् । अत एव कतेर्नामीति वक्तव्ये सामान्येन नामीतिदीर्घविधानेन संनिपातपरिभाषाया अनित्यत्वोपवर्णनं शेखरोक्तं संगच्छते । अन्यथा कतीनामित्यत्र तेन दीर्घे षट्त्वविघातः स्पष्ट एवेति दिक् । तुक्यजन्तत्वविघात इति । इदं ह्रस्वस्यैव तुगागम इत्यभिप्रायेण । तत्पक्षे ह्यागमसंनिधाने तद्विशिष्टत्वेपि तकारस्य समुदायावयवत्वमवयवावयवन्यायगम्यं

मुक्तं कृन्मेजन्त इति सूत्रे वार्तिककृतेति केचित् ॥ संनिपातलक्षणविधित्वमस्या लिङ्गम् । स्वप्रवृत्तेः प्राक् स्वनिमि-

पाश्चात्यमित्यागमविधानकालिकाजन्तत्वविघातो दुर्वार एव । ह्रस्वांतस्य तुगागमे तु यदागमन्यायेन विधानवेलायामेवावयवत्वग्रह इति नास्त्यजन्तत्वविघात इति बोध्यम् । वार्तिककृतोक्तमिति । अन्यथा पूर्वपरसांनिपाताभावादेतद्विरोधः स्पष्ट एव । ननु विशेष्यविशेषणसंनिपातग्रहणादेव ग्रामणिपुत्रेत्यादौ तुग्वारणसंभवे ऽन्तरंगपरिभाषया तुग्वारणं भाष्योक्तमसंगतमित्यतआह । उत्तरपदनिमित्तके ह्रस्वत्वे यथाकथंचिदिति । ईश्वातोः क्विपि ह्रस्वे इ कुलमित्यत्र बहिरंगत्वाभावात्तुग्वारणायास्या आवश्यकत्वमिति तदाशयः । एकदेशिनेति । नाजानंतर्यपरिभाषा ऽज्ञानेन मवृत्तत्वादस्यैकदेशयुक्तित्वमिति भावः । अत एवेति । अस्यैकदेशयुक्तित्वादेवेत्यर्थः । परिभाषाफलत्वेनेति । संनिपातपरिभाषाफलत्वेनेत्यर्थः । संनिपातलक्षणविधित्वमिति । संनिपातलक्षणशास्त्रत्वमित्यर्थः । विधिशब्दे करणे किप्रत्ययात् । एवं चास्या नतिंम्रितिशास्त्रदेशीयत्वेन सापादिकतया त्रिपाद्यास्तादृशशास्त्रत्वप्रकारकज्ञानाभावात्तत्रेयं न प्रवर्तते । अत्र मानं च मय उञोवोवेत्यनेन वकारविधानमेव । तस्य त्रिपाद्यां विधानं वत्वस्यासिद्धत्वादनुस्वाराभावार्थम् । अस्याः त्रिपाद्यां प्रवृत्तौ तु तयैवानुस्वारवारणे इकोयणचीत्युत्तरं मयउञोवेति पाठेन यणोनुवृत्त्या चेष्टसिद्धौ तद्वैयर्थ्यं स्पष्टमेव । अत एव च नर्तिष्यतीत्यत्रेटः सकारनिमित्तकत्वेपि षत्वम् । धुक्षीष्टेत्यत्र षत्वस्य दादित्वानिमित्तकत्वेपि भष्भावः । जग्धमित्यत्र जग्धादेशस्य तकारनिमित्तत्वेपि धत्वम् । द्रक्ष्यतीत्यत्र षढोरितिकत्वस्य सकारनिमित्तत्वेपि षत्वम् । सञ्च्छम्भुरित्यत्र तुकः शकारनिमित्तकत्वेपि शच्छोटीतिच्छत्वं चेत्यादि सिध्यतीति भावः । स्वप्रवृत्तेः प्रागिति । अत्र तद्विघातकेतिक्तांतपाठस्त्वयुक्तः किं तु तद्विघातस्येति घञन्तपाठ एव युक्तो ऽन्यथा ऽनन्वयापत्तेः । स्वातिरिक्तशास्त्रस्य सुपिचेत्याद्यतिरिक्तस्य ङेर्यइत्यादिशास्त्रस्य । स्वप्रवृत्तेः प्राक् सुपिचेत्यादिप्रवृत्तेः प्राक् । स्वनिमित्तभूतः सुपिचेत्यादिशास्त्रनिमित्तभूतः । तथा च स्वनिमित्तभूतः संनिपातः, स्वनिमित्तभूतसंनिपातसंपादकस्य स्वातिरि-

त्तभूतो यः संनिपातस्तद्विघातस्य स्वातिरिक्तशास्त्रस्य स्वयमनिमित्तमिति फलति ॥

नन्वेवं रामायेत्यादौ सुपि च इति दीर्घानापत्तिः । अदन्ताङ्गङेसंनिपातेन जातस्य यादेशस्य तदविघातकत्वात् ॥ न च यञादित्वसापेक्षदीर्घस्य बहिरङ्गतयाऽसिद्धत्वान्नात्र संनिपातविघात इति वाच्यम् । आरोपितासिद्धत्वे ऽपि वस्तुतस्तविघातस्य जायमानत्वेनैतत्प्रवृत्तेः । किं चान्तरंगे कर्त्तव्ये बहिरंगस्यासिद्धत्वे ऽपि तत्र कृते तस्यासिद्धत्वे मानाभावः । किं चातिदेशिकसंनिपातविघाताभात्रमादायैतदप्रवृत्तौ गौरीत्यादौ संबुद्धिलोपे ऽपि स्थानिवत्वेन ह्रस्वनिमित्तसंनिपातविघाताभावात्तैत्रतस्यातिव्याप्तिपरकृन्मेजन्तइति सूत्रस्थभाष्यासंगतिः । संनिपातस्याशास्त्रीयत्वान्नात्र स्थानिवत्वमिति

---

क्तशास्त्रस्य निमित्तभूतः संनिपातश्चेत्युभयविधोपि गृह्यते इति सूचितम् । एतदुभयविधसंनिपातसंग्रहायैव स्वप्रवृत्तेः प्राक् स्वनिमित्तभूत इत्युभयोपादानम् । एतद्ग्रन्थबोधितसंकोचप्रकारः प्राक् प्रदर्शित एवेति बोध्यम् । वस्तुतस्तद्विघातेति । ननु शास्त्रप्रवृत्तौ निवृत्तौ च तद्बुद्धिरेव नियामिका न तु वास्तविकी तत्सत्ता । अन्यथा हरएहीत्यत्र यलोपस्यासिद्धत्वेपि वृद्धिर्दुर्वारेत्यरुचेराह । किं चेति । ननु ङेर्यइत्यस्य प्रवृत्तेःप्रागेवाऽभ्यनुज्ञाकाले मत्संनिपातविघातकः क इति जिज्ञासायां सुपिचेत्यस्योपस्थित्या तस्य बहिरंगत्वमिति न तत्कृतं विघातं पश्येदित्यरुचेराह । किं चेति । अशास्त्रीयत्वादिति । वस्तुतोत्र प्रत्ययसत्ताबोधनमेवावश्यकं, संनिपातस्त्वार्थसमाजग्रस्त एवेति चिन्त्यमेतादिति केचित् । समाहितमिति । यद्यपीदं भा-

चेतर्ह्यत्रासिद्धत्वमपि कथमिति विभावय। अशास्त्रीये ऽसिद्धत्वाप्रवृत्तेरीदूदेत् इति सूत्रे कैयटेन स्पष्टमुक्तत्वात् । एवं च पूर्वत्रासिद्धीये ऽपि कार्य्ये एतत्परिभाषाप्रवृत्तिर्भवत्येवेति चेत् । न । कष्टाय इति निर्देशेनैतस्या अनित्यत्वात् ॥

ययोः संनिपातस्य विघातकं शास्त्रं तयोः संनिपातनिमित्तकविधावुपादानमपेक्षितमिति तु नाग्रहः । अत एव दाक्षिरित्यत्राकारांतप्रकृतीञ्संनिपातनिमित्तांगसंज्ञानया परिभाषयाल्लोपस्य निमित्तं न स्यादित्याशङ्क्यानित्यत्वेन समाहितं ङ्मेजन्त इति सूत्रे भाष्ये, न ह्यंगसंज्ञायामदन्तस्यांगसंज्ञेत्युक्तमस्ति ॥ न च कुम्भकारेभ्य आधय इत्यादावव्ययसंज्ञाया अनया परिभाषया वारणपरभाष्यासंगतिः । अनया परिभाषया लुग्मा भूत् । अव्ययत्वं तु स्यादेव । लुका हि तदीयसंनिपातस्य विघातो नाव्ययसंज्ञया । संज्ञाफलं त्वकच् स्यादिति वाच्यम् । एतदुदाहरणपरभाष्यप्रामाण्येन साक्षात्परंपरया वा स्वनिमित्तसंनिपातविघातकस्य स्वयमनिमित्तमित्यर्थेनादोषात् । एतेनात्राकच् स्यादित्यपास्तम् ॥ न च कार्यकालपक्षे

---

ष्यमेकदेशि तथाप्यत्रांशे मानं भवत्येवेति बोध्यम् । परंपरयेति । लुग्द्वारा एत्वनिमित्तविभक्तिनाशादित्यर्थः । नन्वेवं सत्यूखतुरित्यत्र सव-

लुगेकवाक्यतापन्नसंज्ञाबाधेप्यकजेकवाक्यतापन्ना स्यादिति वाच्यम्। अन्तरंगायां तदेकवाक्यतापन्नसंज्ञायां बहिरंगगुणादेरसिद्धत्वात्, लुगेकवाक्यतापन्ना तु न गुणादितोन्तरंगोभयोरपि शब्दतः सुबाश्रयत्वात् ॥

न यासयोरिति निर्देशाच्चैषाऽनित्या तेन नातिप्रसंगः। स्पष्टा चेयं कृन्मेजन्त इति सूत्रे भाष्ये ॥ अस्या अनित्यत्वे फलानि भाष्ये परिगणितानि, वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तम्। दाक्षिः॥ आत्वं पुग्विधेः। क्रापयति॥ पुग्ह्रस्वस्य। अदीदपत्॥ त्यदाद्यकारष्टाब्विधेः। या सेति ॥इड्विधिराकारलोपस्य। पपिवान्। ह्रस्वनुड्भ्यां

---

णंदीर्घानापत्तिः लिड्विघातकलुक्प्रयोजकामुसंपादकगुरुमत्वसंपादकत्वेन दीर्घस्य परंपरया द्विर्वोपजीव्यलिड्विघातकत्वादिति चेन्न । विधिद्वयाघटितपरंपराया एव ग्रहणेनादोषात्। अत्र चैतद्भाष्यमेव मानम्। अतरंगायामिति। अकचः स्वार्थिकत्वादिति भावः । शब्दत इति । अकच् तु सुबुत्पत्यनंतरं प्रवर्तमानोपि न तथा सुबाश्रय इति भावः। पुग्विधेः क्रापयतीति । ननु आतिदेशिकेत्यत्र यदागमन्यायातिरिक्तत्वेन संकोचः। अत एव सामआकमित्यत्र सुटस्त्वाकमावयवत्वान्न संनिपातविघात इत्युक्तं भाष्यशेखरयोः। किं चातिदेशिकसंनिपातविघाताभावेप्येषा प्रवर्तते इत्यत्र बीजं हि अतिदेशेन तत्वबुद्धावपि अतिदेशप्रवृत्तेः पूर्वक्षणेषु विघातोस्त्येवेति। तच्च यदागमन्यायाविषये नास्ति विधानकालएवावयवत्वेन बोधनात्। एवं च न क्रापयतीत्यत्रानित्यत्वफलमिति चेन्न। क्रीङ्जीनामित्यनेन णिजव्यवहितपूर्ववर्तिनिर्दिश्यमानावयवैच आत्वविधानेन पुकि सति निर्दिश्यमानत्वविघातेनानित्यत्वस्यावश्यकत्वात् । यदागमन्यायेन निर्दिश्यमानत्वं तु न, अपिबदित्यत्रापि अडागमसहितस्य पिबादेशापत्ते-

मतुप् अन्तोदात्तादुत्तरपदात् इति मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य । अग्निमान् । परमवाचा ॥ नदीह्रस्वत्वं संबुद्धिलोपस्य । नदिकुमारीत्यादि ॥ यादेशो दीर्घत्वस्य । कष्टाय ॥ इतो ऽन्यत्र प्रवृत्तिरेव, दोषाः खल्वपि साकल्येन परिगणिता इति भाष्योक्तेरित्यन्यत्र विस्तरः ॥ ८६ ॥

ननु पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यादौ द्विगोर्लुगित्यणो लुकि लुक्तद्धित इति स्त्रीप्रत्ययलुक्यानुकः श्रवणापत्तिरत आह ॥

## संनियोगशिष्टानामन्यतरापाय उभयोरप्यपायः ॥८७॥

---

रित्युक्तमधस्तात् । अग्निमानिति । अंतोदात्तत्वमुपजीव्यजायमानेन मतुबुदात्तत्वेन शेषनिघातद्वारा तद्विघातः स्पष्ट एवेति बोध्यम् । इतोन्यत्रेति । एतदुदाहरणादेचो ऽयवायावइत्यादिनिर्देशाच्च संधिकार्येष्वेषा न प्रवर्तते । तत्रा ऽत्वमुपजीव्य जायमानेनोत्वेन गुणद्वारा तद्विघातः स्पष्ट एव । अत एव गवाग्रमित्यादिसिद्धिः ॥ ८६ ॥

संनियोगशिष्टानामिति । संनियोगशिष्टौ च संनियोगशिष्टौ च संनियोगशिष्टौ च संनियोगशिष्टाः । अन्यतरश्चान्यतरश्चान्यतरश्चान्यतरे, तेषामपाये इति च विग्रहः । अत एव बहुवचनोपपत्तिरिति केचित् । परे तु द्वित्वविशिष्टसंनियोगशिष्टत्वावच्छिन्नबोधकतया संनियोगशिष्टपदस्य बहुवचनान्तत्वोपपत्तिः । एकशेषेण तु न निर्वाहः । यावतामेकशेषः क्रियेत तावतां ग्रहणेपि अत्रशिष्टानामग्रहणप्रसंगात् । विवक्षितसंख्याज्ञानं च दुर्लभमुभयोरित्यत्रोभयेषामित्यापत्तिश्चेत्याहुः । समुच्चयेन विहितघट-

अत्र च बिल्वकादिभ्यश्छस्य लुक् इति सूत्रस्थं छग्रहणं ज्ञापकम् । तद्धि छमात्रस्य लुग्बोधनद्वारा कुको ऽनिवृत्तिर्यथा स्यादित्यर्थम् । कृतकुगागमा नडाद्यन्तर्ग-

---

कान्यतरस्यापाये संभाविते तदुभयोरप्यनुत्पत्तिः कर्तव्येति परिभाषार्थः । यथाश्रुतं तु न सम्यक् । एकस्यापाये उभयस्याभावात् । वस्तुत एकसत्त्वे उभयाभावबुद्धावपि एकस्मिन्नष्टे उभयं नष्टमिति व्यवहारस्य लोके असत्त्वेन यथाश्रुतार्थेपि दोषाविरहः । अत्र केचिदियं परिभाषा धर्मिग्राहकमानाल्लुग्विषया । तेन फौल्लिरित्यत्रोकारनाशेपि न लत्वस्य निवृत्तिः । खेयमित्यत्रेकारानिवृत्तावपि क्यपो न निवृत्तिः । तार्त्तीयीक इत्यत्र संप्रसारणनाशेपि न प्रत्ययनाश इति वदन्ति । तन्न युक्तम् । वातातीसाराभ्यामितिनिष्पन्नवातकिशब्दादपत्ये ऽणि टिलोपे कुको निवृत्त्यभावापत्त्या वात इति रूपासिद्धिप्रसंगात् । लुगितरत्र प्रवृत्तिस्वीकारादेव चैनेय इत्यत्रैतत्परिभाषाप्रयोज्यनकारानिवृत्त्यभावाय पूर्वस्य स्थितौ स्थानिवद्भावाश्रयणमाकरोक्तं संगच्छते । अस्याः परिभाषायाश्चान्यतरस्य प्रधानस्य निवृत्तौ तदितरस्याप्रधानस्य निवृत्तिरित्यर्थ आश्रीयते । तेन फौल्लिरित्यत्र निष्ठादेशप्रकरणे लत्वस्यैव प्राधान्यादुत्वस्याप्रधानत्वेन तन्निवृतावपि न लत्वनिवृत्तिः । एवमन्यत्र प्रत्ययविधानप्रकरणेनेत्वसंप्रसारणयोरप्राधान्यात् न तन्निवृत्तावनया प्रत्ययनिवृत्त्यापत्तिः । एवमैनेय इत्यत्र च ङीप एव प्राधान्यात्तन्निवृत्तौ प्राप्तनकारानिवृत्त्यभावार्थं स्थानिवत्त्वमप्यावश्यकमिति दिक् । के चित्तु अचःपरस्मिन्नितिसूत्रे भावसाधनविधिशब्दात्पूर्वविधिशब्देप्यविशेषात् पंचमीसमासाश्रयणे न फौल्लिरित्यादावपि पूर्वत्वेन दृष्टात् फकारादेः परस्य लकारादेः स्थितौ कर्तव्यायां स्थानिवद्भावेनान्यतरापायाभावेन लकारादेरनिवृत्तिः सुलभा । न च पंचमीसमासपक्षे ऽव्यवहितपरस्यैव ग्रहणम् । अत एव हेगौरित्यत्र सुलोपो नेति प्रकृते तदसंभव इति वाच्यम् । हेगौरित्यत्र पंचमीसमासप्रयुक्तस्थानिवद्भावस्यानित्यत्वेनाप्रवृत्तावपि इष्टप्रयोगे तदप्रवृत्तिकल्पने नामाभावादिति वदन्ति । यथास्यादिति । एतत्परि-

ता बिल्वादय एव तत्र निर्दिष्टा बिल्वकादिशब्देन । न चैवमपि छग्रहणं व्यर्थं कृतकुगागमानुवादसामर्थ्यादेव तदनिवृत्तिसिद्धेः । अन्यथा बिल्वादिभ्य इत्येव वदेत् । लक्षणप्रतिपदोक्तपरिभाषया बिल्वादिपुरस्कारेण विहितप्रत्ययस्यैव लुग्विधानान्नातिप्रसंग इति वाच्यम् । ततोऽपि प्रतिपदोक्तत्वेन बिल्वादिभ्यो ऽण् इति विकाराद्यर्थस्य लुगापत्तिवारणार्थं कुगनुवादचारितार्थ्यात् ॥ समुच्चयार्थकचशब्दयोगे तु विधेययोरेककालिकत्वैकदेशत्वनियमान्न्यायसिद्धापीयम् ॥ यत्तु णाविष्ठवदित्यनेन पुंवत्वविधानमेतदनित्यत्वज्ञापनार्थमन्यथैतयतीत्यादौ टिलोपेनैव ङीपि निवृत्ते संनियोगशिष्टपरिभाषया नस्यापि निवृत्यैतयतीत्यादिसिद्धौ पुंवत्ववैयर्थ्यं स्पष्टमेवेति टेरिति सूत्रे कैयट, स्तन्न । इडबिडमाचष्ट ऐडबिडयतीत्यादौ पुंवत्वस्यावश्यकत्वात् ॥ ऐनेयः

---

भाषाभावे च कुको निवृत्तेरप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेति भावः । कृतकुगागमा इति । व्याख्यानादितिभावः । तेन कप्रत्ययान्तबिल्वकशब्दप्रकृतिकस्य च्छप्रत्ययेतरस्य लुगभावार्थं छग्रहणमिति नाशंकनीयमिति बोध्यम् । प्रतिपदोक्तपरिभाषयेति । नडाद्यन्तर्गतानां बिल्वादिनां तत्तच्छब्दत्वेन ज्ञानादिति भावः । ततोपि प्रतिपदोक्तत्वेनेति । गणज्ञानानपेक्षत्वेन ततोपि शीघ्रोपस्थितिकत्वेनेत्यर्थः । कुगनुवादचारितार्थ्यादिति । न च बिल्वादिभ्यश्छस्य लुगितिवक्तव्ये बिल्वकादिभ्य इति कृतकुगागमानुवादसामर्थ्यादेव न कुको निवृत्तिरिति वाच्यम् । तृणवेतसशब्दयोर्नडादिगणादयुत्करादिषु पाठेन कुगनुवादाभावे तद्विहितच्छस्यापि लुगापत्तेः । ऐडविडयतीति । एवं दरदमाचष्टे दारदयतीत्यत्र बोध्यम् । दरद-

श्यैनेय इत्यादि तु स्थानिवत्त्वेन सिद्धमित्यन्यत्र विस्तरः ॥ ८७ ॥

ननु चुरा शीलमस्याः सा चौरीत्यादौ शीलम् छत्रादिभ्योण इति णे ङीप् न प्राप्नोतीत्यत आह ॥

## ताच्छीलिके णे ऽण्कृतानि भवन्ति ॥ ८८ ॥

अन् इत्यणि विहितप्रकृतिभावबाधनार्थं कार्मस्ताच्छील्ये इति निपातनमस्या ज्ञापकम् ॥ ताच्छीलिकणान्तादणो द्व्यच इति फिञ्सिद्धिरप्यस्याः प्रयोजनमिति नव्याः । ताच्छीलिक इत्युक्तेस्तदस्यां प्रहरणम् इति णे दाण्डेत्येव ॥ कार्म इति सूत्रे भाष्ये स्पष्टा ॥ ८८ ॥

ननु कंसपरिमृड्भ्यामित्यादौ मृजेर्वृद्धिर्दुर्वारेत्य-

---

शब्दादैडविडशब्दात्तद्राजप्रत्ययस्य अतश्चेति स्त्रियां लुकि ततो णिचि स्थानिवद्भावविषयाभावेन प्रत्ययसत्त्वार्थं पुंवद्भावावश्यकत्वम् । सति तु तस्मिन् स्त्रीत्वप्रयुक्तलुको निवृत्त्या तद्धितनिमित्तकादिवृद्ध्यादिसिद्धिरिति भावः । केचित्तु संनियोगशिष्टन्यायेन निवृत्त्यभावरूपपूर्वविधिसत्त्वेनैकेनैवोभयार्थसिद्ध्या न तन्त्रस्यावश्यकत्वमिति वदन्ति ॥ ८७ ॥

शीलमिति । शीलमित्यनुवर्तमाने इत्यर्थः । अण्कृतानीति बहुवचनफलमाह । ताच्छीलिकेति । नव्या इति । तथा चैतद् भाष्याननुगृहीतं फलमित्यस्वरसः । छत्रादिभ्यो ऽणिति वक्तव्ये णग्रहणादेषा ऽनित्या । तेन च्छात्रेत्यत्र न ङीबिति बोध्यम् ॥ ८८ ॥

तत्प्रत्यये इति । धातुत्वावच्छिन्नोद्देश्यताके प्रत्यय इत्यर्थः । त-

त आह ॥

**धातोः कार्यमुच्यमानं तत्प्रत्यये भवति ॥ ८९ ॥**

भ्रौणहत्ये तत्वनिपातनमस्या ज्ञापकम् ॥ धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमिति पाठस्तु प्रसृङ्भिरित्यादावनुदात्तस्य चर्दुपधस्य इत्यमापादनेन भाष्ये दूषितः । यत्कार्यं प्रत्ययनिमित्तं तत्रेयं व्यवस्थापिका । तेन पदा-

---

त्वनिपातनमिति । न च कुत्वाभावार्थं निपातनावश्यकत्वेन ज्ञापकत्वासंभव इति वाच्यम् । होहंतेरित्यत्र णित्साहचर्यात् ञितोपि ष्यञातिरिक्तस्य ग्रहणेन कुत्वाभावस्य सुवचत्वेन ज्ञापकत्वस्य सुस्थत्वात् । पाणिनितात्पर्यविषयीभूततत्वाभावविधानस्य वैयर्थ्येनोक्तपरिभाषानुमानमित्याशयात् । अत एव भाष्यकृतात्र तत्वं निपात्यतइति व्याख्यातम् । एतेन टिलोपाभावार्थं निपातनावश्यकत्वेन ज्ञापकत्वासंभव इति परास्तम् । प्रत्ययनिमित्तकामिति । इयं च धर्मिग्राहकमानेन प्रत्ययत्वव्याप्यधर्मावच्छिन्नोद्देश्यताके विधावेव प्रवर्तते इति भावः । वस्तुत इयमुक्तिर्निष्फला । नशेर्वेत्यत्र तत्प्रवृत्तावपि प्रणङ्भ्यामित्यादौ धातूद्देश्यकाक्विप्प्रत्ययपरकत्वस्य सत्वेन कुत्वप्रवृत्तौ बाधकाभावात् । न चैवं वचिस्वपीत्यस्य प्रत्ययानिमित्तकत्वाभावेपि अनया धातूद्देश्यकप्रत्ययनिमित्तकत्वापत्त्या वेञो विजंतात् क्यचि संप्रसाणानापत्तिरिति वाच्यम् । इष्टापत्तेः । अत एव भाष्ये उच्चारणसामर्थ्यात्काम्यचः ककारस्य नेत्वमित्युक्तम् । अन्यथा वेञो विजंतात्काम्यचि संप्रसारणार्थं कित्वस्यावश्यकत्वेन तदसंगतिः स्पष्टैव । न चैवं किति धातौ संप्रसारणवारणाय वच्यादिभ्यो विहिते कितीति विहितविशेषणवैयर्थ्यापत्तिरेनया तत्प्रत्यये संप्रसारणविधानेन कि-

न्तत्वनिबन्धनं नशेर्वा इति कुत्वं प्रणङ्क्ष्यामित्यादौ भवत्येव । इयङादिविधौ तु नैषा । न भूसुधियोरिति निषेधेनानित्यत्वात् ॥ मृजेर्वृद्धिरित्यत्र भाष्ये स्पष्टा ॥ ८९ ॥

ननु सर्वक उच्चकैरित्यादौ सर्वनामाव्ययसंज्ञे न स्यातामत आह ॥

## तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ॥ ९० ॥

---

ति धातौ तदप्राप्तेरिति वाच्यम् । अश्वब्दादाचारक्विबन्ताद् घञर्थे के विजन्तवच्यादेः पूर्वं प्रयोगे संप्रसारणव्यावृत्तये विहितविशेषणसार्थक्यस्य सुवचत्वात् । तत्रोक्तपरिभाषया तु न निर्वाहः । कस्य धातूद्देश्यकत्वादित्यन्यत्र विस्तरः । अनित्यत्वादिति । वस्तुतस्तु ज्ञापकसाजात्याद्धातुत्वेतरधातुत्वव्याप्यधर्मावच्छिन्नबोधकपदोपादाने एवैतत्परिभाषाप्रवृत्तिस्वीकारेणेयङादिविधौ तदप्रवृत्त्या ऽनित्यत्वस्य नोपयोगः। सृजिदृशोरित्यत्रैतत्परिभाषाप्रवृत्तेर्निर्विवादतया तत्प्रत्यये इत्यस्य संबन्धादर्थाधिकारानुरोधेनानुदात्तस्य च र्दुपधस्येत्यत्रापि तद्ग्रहणेन प्रसृड्भिरित्यत्रोक्तदोषानवकाश इति दिक् ॥ ८९ ॥

सर्वके उच्चकैरिति । ननु जसःशी अव्ययादाप्सुप इत्यत्र विहितविशेषणसत्वान्नात्र दोष इति चेन्न । विहितपदार्थस्य सर्वनामाद्यभिन्नतदाद्यवधिकपररूपतया ऽकज्विशिष्टस्य तदादित्वाभावेनोक्तदोषस्य सुवचत्वात् । तन्मध्यपतित इति । तत्त्वं च निर्दिश्यमानपरिभाषायां प्राङ् निरूपितमेव । गङ्गां प्रविष्टानेका नदी गंगाग्रहणेन गृह्यते, देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते इति लोकन्यायेनायमर्थो न सिद्ध्यति सर्वनामत्वादेरुपसर्गत्वादिवदुक्तपरिमाणत्वेन न्यूने

नेदमदसोरकोरिति सूत्रे ऽकोरिति निषेधो ऽस्या ज्ञापकः ॥ तदेकदेशभूतं तद्ग्रहणेन गृह्यते इति येन विधिरिति सूत्रे भाष्ये पाठः ॥ ९० ॥

ननु गातिस्थाघुपाभूभ्य इति सिचो लुगपासीदित्यादौ पातेरपि स्यादत आह ॥

## लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ॥ ९१ ॥

---

ऽधिके वा शास्त्रव्यापारमन्तरा तत्त्वबुद्धेरसंभवाद् ज्ञापकसाध्य एवायमर्थ इति येनविधिरिति सूत्रे भाष्ये स्पष्टमतो ज्ञापकमाह । नेदमदस इति । इदमेतत्तदोरितिसूत्रस्थस्याकोरित्यस्योपलक्षणम् । नेदमदसोरितिसूत्रे भाष्ये 'इदमदसोःकात्' इति न्यस्यातोभिस इति सिद्धे इदमदसोर्भिस ऐस्स्यात्तर्हि कादेवेति नियममाश्रित्याकोरित्यस्य प्रत्याख्यानात् । विप्रतिषेधसूत्रभाष्ये नेदमदसइत्येतद्घटकस्याकोरित्यस्यैतत्परिभाषाज्ञापकत्वोपवर्णनं तु यथाश्रुतसूत्राभिप्रायेण संभवप्रदर्शनमात्रपरमिति बोध्यम् । नन्वेवं निर्दिश्यमानपरिभाषायां तन्मध्यपतितत्वनिरूपणावसरे गंगानदीदृष्टान्ते उद्देश्यतादेरसंभवेन तत्सिद्धैतन्न्यायेपि तत्प्रवेशस्यायुक्तत्वात् तत्परिष्कारे 'स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्व' रूपसंबन्धमानिवेश्य तत्स्थाने 'स्वसत्तोत्तरसत्ताकत्व' रूपसंबन्धनिवेशनं पूर्वोक्तमप्रामाणिकं, येनविधिरितिसूत्रे भाष्ये विषम उपन्यास इति ग्रन्थेन तन्मध्यपतितन्यायस्य गंगादिदृष्टान्तासिद्धत्वप्रतिपादनात्तद्बलेनोक्तार्थकल्पनाया असंभवादिति चेन्न । भाष्यकृता लोकन्यायस्योक्तपरिमाणधर्मानयने ऽसामर्थ्यप्रतिपादनेन परिभाषासिद्धयावदर्थासाधकत्वबोधनेपि तद्भिन्नानामव्ययत्वादीनां लोकन्यायेनानयनस्य भाष्यकाराभिमततया निरुक्तसंबंधनिवेशनस्य सप्रमाणत्वादिति दिक् ॥ ९० ॥

अस्याश्च ज्ञापकः स्वरति सूति इति सूत्रे सूङिति वक्तव्ये सूतिसूयत्योः पृथङ्‌ निर्देश इति कैयटः । तन्न । साहचर्यादलुग्विकरणस्यैव ग्रहणे प्राप्ते पृथङ्निर्देशस्य तज्ज्ञापकत्वासंभवात् । ध्वनिता चेयं परिभाषा यस्य विभाषेत्यत्र भाष्ये । तत्र हि विदित इति प्रयोगे निषेधमाशङ्क्य यदुपाधेर्विभाषा तदुपाधेर्निषेधो विभाषा गमहनविदविशाम् इति सूत्रे शविकरणस्य ग्रहणं लुग्विकरणश्चायमित्युक्तम् । तत्र चो हतौ । यतोऽयं लुग्विकरणोऽतो विशिसाहचर्याच्छविकरणस्य ग्रहणं न तु हनिसाहचर्यादस्यापि, एतत्परिभाषाविरोधादिति तदाशयः ॥ अत एव परिभाषायां लुग्विकरणस्यैवेति नोक्तम् ॥ कण्ठतस्तु भाष्ये एषा क्वापि न पठिता ॥ गातिस्था इति सूत्रे पिबतेर्ग्रहणं कर्तव्यमिति वार्तिककृता, सर्वत्रैव पाग्रहणेऽलुग्विकरणस्य ग्रहणमिति भा-

---

साहचर्यादिति । पूर्वोत्तरयोरलुग्विकरणयोः स्वरतिधूञोः साहचर्यादित्यर्थः । वस्तुतस्तु स्वरतिधूञूदित्सूङो वेति न्यासे साहचर्याश्रयणेपि दोषाभावेनेष्टासिद्धेः कैयटोक्तमपि युक्तमेवेति बोध्यम् । ननु सूतिसूयत्योः पृथङ्‌निर्देशस्य लुग्विकरणस्यैव ग्रहणमिति विपरीतार्थज्ञापनेपि चारितार्थ्यसंभवात्त्वदुक्तस्यैवाचार्याभिप्रेतत्वमित्यत्र मानाभाव इत्यत आह । ध्वनितेति । अन्यतरार्थस्य तेन कल्पनसंभवेपि भाष्यप्रामाण्यादुक्तार्थ एव पाणिन्यभिप्रेत इति भावः । तदेवाह । अत एवेति । पूर्वोक्तभाष्यसंदर्भेणालुग्विकरणस्यैव ग्रहणमित्यर्थस्याभिप्रे-

ण्यकृता चोक्तम् ॥ स्वरतिसूति इति सूत्रे कैयटेन च स्पष्टमुक्ता ॥ ९१ ॥

ननु प्रजिघाययिषतीत्यादौ हेरचङीति विधीयमानं कुत्वं न स्यादत आह ॥

## प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् ॥ ९२ ॥

अचङीति प्रतिषेध एवास्या ज्ञापकः ॥ इयं च कुत्वविषयैव । हेरचङीति सूत्रे भाष्ये स्पष्टेयम् ॥ ९२ ॥

ननु युष्मभ्यमित्यादौ भ्यस इत्यत्र भ्यमिति च्छेदे भ्यसो भ्यमि कृते ऽन्त्यलोपे एत्वं स्यादत आह ॥

---

तत्वादेवेत्यर्थः ॥ ९१ ॥

कुत्वं न स्यादिति । ननु हेरचङीत्यस्य हिनोतेरभ्यासात्परस्य कुत्वमित्यर्थादुक्तरूपे तत्सत्वेन कुत्वं सुवचमिति चेन्न । वार्णपरिभाषायां प्राक्प्रदर्शितरीत्या द्वित्वप्रयोजकप्रत्यये इत्यस्यात्र सूत्रे संबंधेनोक्तरूपे णिचो व्यवधानात्तादृशप्रत्ययपरकत्वाभावेन कुत्वाप्राप्त्युद्भावनस्य युक्तत्वात् । अत एव चाचङीति सूत्रभाष्योक्तं तज्ज्ञापकं संगच्छेत । कुत्वविषयैवेति । अत एव शाययतीत्यत्रादिप्रभृतिभ्य इति न शपो लुगिति भावः । भाष्ये स्पष्टेयमिति । तत्र हि हेरचङ्प्रतिषेधानर्थक्यमंगान्यत्वात् । ज्ञापकं तु चङो ऽन्यत्र ण्यन्तेपि कुत्वभावस्येति ॥ ९२ ॥

तद्वैयर्थ्यमिति । ननु ज्यायश्शब्दाण्ण्यन्तात्क्विपि णिलोपयलोपयोः पुनस्तस्माण्णिजन्तात्क्विपि पुक्संपन्नाद् ज्यापृशब्दादीयसुनि ज्यापाया-

# अङ्गवृत्ते पुनर्वृत्तावविधिः ९३

अङ्गे ऽङ्गाधिकारे वृत्तं निष्पन्नं यत्कार्यं तस्मिन्सति पुनरन्यस्याङ्गकार्यस्य वृत्तौ प्रवृत्तावविधानं भवतीत्यर्थः ॥ एषा च ज्यादादीयस इत्याद्विधानेन ज्ञापिता । अन्यथेकारलोपेनाकृत्सार्व इति दीर्घेण च सिद्धे तद्वैयर्थ्यं स्पष्टमेव । अत एव भिन्नस्थानिकाङ्गकार्यविषयाप्येषा ॥ इयं चानित्या द्वयोरिति निर्देशात् । अनित्यत्वबलल-भ्यार्थमादायैव भ्यसोभ्यम् इति सूत्रे भाष्ये निष्ठितस्येति पठितम् ॥ केचित्त्वनया परिभाषया न किञ्चिल्लक्ष्यं साध्यते।अत एव ज्ञाजनोर्जा ज्यादादीयस इति सूत्रयोरेनां ज्ञापयित्वा किं प्रयोजनमिति प्रश्ने पिबतेर्गुणप्रतिषेध उक्तः स न वक्तव्य इत्येव प्रयोजनमुक्तम् न तु लक्ष्यसिद्धि-रूपम् । तदुक्तम् भ्यसोभ्यमित्यत्राभ्यामिति च्छेदः शेषे लोपश्चान्त्यलोप एवातो गुणे इति पररूपेण सिद्धं युष्मभ्यमित्यन्यत्र निरूपितम् । एवं च सूत्रद्वयस्थमे-

---

निति सिद्ध्यर्थमाकारविधानं चारितार्थमिति चेन्न । ज्ञापकपरोक्तभा-ष्यप्रामाण्येनैषामनभिधानात् । णिलोपस्य स्थानिवत्वेन तदप्राप्तेश्चेति बोध्यम् । अत एवेति । आद्ग्रहणज्ञापितत्वेन तत्साजात्यादित्यर्थः । नन्वेतत्परिभाषासत्वे येषामित्यादौ त्यदाद्यत्वोत्तरं बहुवचने इत्येत्वाना-पत्तिरत आह । अनित्येति । निष्ठितस्येति । परिनिष्ठितस्येत्यर्थः । एवं च यत्रांगाधिकारीयकार्यप्रवृत्त्युत्तरं लक्ष्यस्य परिनिष्ठितत्वं संपद्यते तत्र द्वितीयमंगाधिकारीयं कार्यं न प्रवर्तते । यत्र तु न तथा तत्र पुनरं-

तज्ज्ञापनपरं भाष्यं भ्यसो भ्यामिति सूत्रस्थं च भाष्यमेकदेश्युक्तिरित्याहुः ॥ ९३ ॥

यत्त्वोरोदिति वाच्ये ओर्गुण इति गुणग्रहणात्

## संज्ञापूर्वकविधेरनित्यत्वम् ॥९४॥

इयं च विधेयकोटौ संज्ञापूर्वकत्व एव । तेन स्वायम्भुवमित्यादि सिद्धम् ॥ तथा निलोडित्येव सिद्ध आनिग्रहणात्

## आगमशास्त्रमनित्यम् ॥ ९५ ॥

तेन सागरं तर्तुकामस्येत्यादि सिद्धम् ॥ तथा तनादिपाठादेव सिद्धे तनादिकृञ्भ्य इति सूत्रे कृञ्ग्रहणात्

---

गाधिकारीयमपरं प्रवर्तते एव । परिनिष्ठतत्वज्ञानं च शिष्टप्रयोगादितो ज्ञेयमिति तदाशयः । प्रयोजनमुक्तमिति । तच्च पिवादेशस्यादन्तत्वादन्यथाऽसिद्धमिति भावः । इत्यन्यत्रेति । इत्यादिरस्या विषयोऽन्यत्र शेखरे शब्दरत्ने च विस्तरेण निरूपित इत्यर्थः ॥ ९३ ॥

इयं चेति । यत्र शास्त्रे संज्ञाशब्दो विधेयताप्रयोजकस्तस्या ऽनित्यत्वमित्यर्थः । धर्मिकग्राहकमानसिद्धस्यास्यार्थस्यास्वीकारे तु प्रायः शास्त्रमात्रस्य संज्ञापूर्वकत्वेनानित्यत्वस्वीकारे ऽनिष्टप्रसंग इति भावः । स्वायंभुवमिति । अत्र संज्ञापूर्वकत्वेन गुणस्याप्रवृत्तेरुवङ् सिद्ध्यति ॥

तर्तुकामस्येति । अत्रेडभावसिद्धिरस्याः प्रयोजनम् ॥

## गणकार्यमनित्यम् ॥ ९६ ॥

तेन न विश्वसेदविश्वस्तमित्यादि सिद्धम् ॥ तथा चक्षिङो ङित्करणात्

## अनुदात्तेत्त्वलक्षणमात्मनेपद-मनित्यम् ॥ ९७ ॥

तेन स्फायन्निर्मोक इत्यादि सिद्धम् ॥

तथा विनार्थनञा समासेनानुदात्तं पदमनेकमित्येव सिद्धे वर्जग्रहणात्

## नञ्घटितमनित्यम् ॥ ९८ ॥

तेन नेयङुवङ् इत्यस्यानित्यत्वाद्धे सुभ्रु इति सिद्ध-मिति । तन्न । भाष्ये ऽदर्शनात् । भाष्यानुक्तज्ञापितार्थस्य साधुतानियामकत्वे मानाभावात् भाष्याविचारितप्र-

---

गणकार्यमिति । गणनिर्देशप्रयुक्तं कार्यमनित्यमित्यर्थः। विश्वसेदिति । अदादिगणप्रयुक्तशब्लुकः प्रवृत्त्यभावः ॥

स्फायन्निति । अत्र धातोरनुदात्तेत्त्वेपि परस्मैपदशतृसिद्धिः ।

हे सुभ्रु इति । अत्रानित्यत्वेनोक्तनिषेधाप्राप्त्या नदीत्वेनाम्बार्थ इति ह्रस्वसिद्धिः ॥

अदर्शनादिति । ननु शिष्टप्रयोगसमर्थनाय तत्तत्पाणिनिप्रयासवै-यर्थ्यान्यथानुपपत्त्यैतत्कल्पनेपि क्षतिविरह इत्यत आह । भाष्यानुक्तेति । तथा च महर्षेरज्ञानकल्पनापेक्षया शिष्टप्रयोगाणामसाधुत्वकल्पनमेव न्या-य्यमिति भावः। नन्वेवं तत्तत्परिभाषाज्ञापकसूत्रकारप्रयत्नवैयर्थ्यमत आ-ह । अदृष्टेति । लोड्ग्रहणवदिति । यथा त्वन्मते प्रत्ययाप्रत्ययपरिभाषया

योजनानां सौत्राक्षराणां पारायणादावदृष्टमात्रार्थकत्वकल्पनाया एवौचित्यात् ॥ किञ्च ज्ञापितेप्यानीत्यस्य न सार्थक्यमाडागमशून्यप्रयोगस्याप्रसिद्धेः । आद्ग्रहणं तु लोड्ग्रहणवदिति बोध्यम् । अत एव घोर्लोपो लेटि वा इति सूत्रे वेति प्रत्याख्यातम् । लोपे ऽप्याट्पक्षे आटः श्रवणं भविष्यति दधादिति । अटि दधादिति । आगमशास्त्रस्यानित्यत्वे त्वाट्यसति दधादित्यसिद्ध्या वाग्रहणस्यावश्यकत्वेन तत्प्रत्याख्यानासङ्गतिः स्पष्टैव । एतेन

---

ऽऽनीत्यस्य प्रत्ययस्यैव ग्रहणेन लोड्ग्रहणं व्यर्थं तथा मन्मते आड्ग्रहणमिति भावः। एतेनानधातोः प्रपूर्वकात्कर्मणि लुङि चिणि प्रानीत्यत्र णत्वाभावाय लोड्ग्रहणमावश्यकमित्यपास्तम् । अत एवेति । एतस्या अभावादेवेत्यर्थः । असंगतिरिति । ननु वाग्रहणसत्त्वेप्यटि दधादिति, आटि दधादिति, परिभाषया ऽडाटोरभावे दधू इति,रूपत्रयं, वाग्रहणप्रत्याख्याने ऽप्युक्तरीत्या परिभाषावादिमते निरुक्तरूपत्रयमेवेति कथं तदसंगतिरिति चेन्न । वाग्रहणसत्वे आटि अभ्यस्तानामित्यनेनाद्युदात्तं दधादिति, आडभावे ऽजादिलसार्वधातुकपरत्वाभावेनाभ्यस्तानामित्यस्याप्राप्त्या धातोरित्यंतोदात्तं दधादित्येवमेकानुपूर्वीमद्रूपद्वयं भवति, प्रत्याख्याने तु लोपस्य नित्यत्वेनाडागमाभावे च दधादित्यन्तोदात्तद्वितीयरूपासंभवेनैकमेवाडागमसहितमाद्युदात्तं दधादिति रूपमिति फलभेदस्य स्पष्टतया तदसंगतेः सुवचत्वात् । मन्मते तु आटो नित्यत्वेन सर्वत्रैवाभ्यस्तानामित्याद्युदात्तप्राप्त्यान्तोदात्तदधादिति रूपासिद्ध्या फलभेदाभाव एव । न च लोपाभावपक्षे आडागमाभावेनाभ्यस्तानामित्यस्याप्राप्तावपि अविद्यमानोदात्ते लसार्वधातुके परे ऽभ्यस्तानामादिरुदात्त इत्यर्थकेनानुदात्ते चेत्यनेनाद्युदात्तसिद्ध्या तत्पक्षेपि रूपद्वयसत्त्वेन न फलभेद इति वाच्यम् । पर्युदासन्यायेनोदात्तघटिताभिन्ने ऽज्घटिते तत्प्रवृत्तेः स्वीकारादडागमरहिते दधादितिरूपे तदप्राप्तेर्दधावामित्यादावुदात्ते परतोनुदात्तेचेत्यस्याप्राप्त्यात्र

यत्कैयटेन केचिदित्यादिनास्यैव वाग्ग्रहणस्य तदनित्यत्वज्ञापकतोक्ता सापि चिन्त्या । प्रत्याख्यानपरभाष्यविरोधात् । तनादिसूत्रे कृञ्ग्रहणस्य भाष्ये प्रत्याख्यानाच्च ॥ चक्षिङो ङकारस्यान्तेदित्वाभावसम्पादनेन चारितार्थ्याच्च । एवमेव

## आतिदेशिकमनित्यम् ॥ ९९ ॥

## सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् ॥ १०० ॥

इत्यादि भाष्यानुक्तं बोध्यम् ॥

स्वायम्भुवमित्यादि लोकेऽसाध्वेवेत्यन्यत्र विस्तरः ॥

---

फलभेदस्य दुर्वारत्वाच्चेति दिक् । अन्तेदित्वाभावसंपादनेति । तदर्थमकारकरणे तु प्रागुक्तदूषणमेवेति बोध्यम् ॥

आतिदेशिकमनित्यमिति । अत्र च लोटोलङ्वदित्यतिदेशो ज्ञापकः।अन्यथा ङ्लोडित्युक्तेपि ङित्कार्यनिर्वाहे तद्वैयर्थ्यापत्तिः।तेन जुह्वत्वित्यत्र सिजभ्यस्तेति जुस् नेति प्राञ्चः।वस्तुतः सिच्साहचर्यादभ्यस्तादप्यनतिदिष्टङित्ववतो लकारस्य स्थाने जायमानस्य झेर्जुसित्यर्थस्वीकारेणोक्तदोषाभावादेतस्या आनर्थक्यं भाष्यानुक्तत्वेनाप्रामाण्यं चेति भावः।लोपविधिरिति । अत्र ज्ञापकं च नाग्लोपीत्यत्र प्रत्याहारग्रहणमिति प्राञ्चः । वस्तुतस्तस्य वृद्धेर्लोपो बलीयानितिविशेषांशज्ञापकताया भाष्यकृतोक्तत्वेन सर्वविधिभ्यो लोपविधेर्बलवत्त्वे प्रमाणाभाव इति भावः । इड्विधिरिति । अत्र ज्ञापकं च नेड्वशीत्यत इटोनुवृत्तौ पुनरार्धधातुकस्येत्यत्रेड्ग्रहणमिति प्राञ्चः । वस्तुतस्तस्य भाष्यकृता प्रत्याख्यातत्वात् अर्थान्तरसंग्रहाय तदावश्यकत्वस्योपवर्णितत्वाच्चोक्तार्थज्ञापकत्वासंभव इति बोध्यम् ॥ लोके त्वसाध्वे-

यदपि ननु हन्तेर्यङ्लुक्याशीर्लिङि वधादेशो न स्यादत आह ॥

## प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ॥ १०१ ॥

षाष्ठद्वित्वस्य द्विःप्रयोगत्वसिद्धान्तेन प्रयोगद्वयरूपे समुदाये प्रकृतिरूपत्वबोधनेनेदं न्यायसिद्धम् । अत एव जुहुधीत्यादौ द्वित्वे कृते धित्वसिद्धिरिति । तदपि न । भाष्ये ऽदर्शनात् । किञ्च तेन सिद्धान्तेन प्रत्येकं द्वयोस्तत्वबोधने ऽपि समुदायस्य तत्त्वबोधने मानाभावः ॥ अत एव दयतेर्दिगीति सूत्रे ऽस्तेः परत्वाद् द्वित्वे कृते परस्यास्तेर्भूभावे पूर्वस्य श्रवणं प्राप्नोतीत्याशंक्य विषयसप्तम्याश्रयणेन परिहृतं भाष्ये । अन्यथा त्वदुक्तरीत्यैकाज्द्विर्वचनन्यायेन समुदायस्यैवादेशापत्तौ तदसङ्गतिः स्पष्टैव । तस्मादुत्तरखण्डमादायैव यथायोगं तत्तत्कार्य-

---

वेति । वेदे तु तन्वादित्वादुवङ् सिध्यति । एवं वृत्रं हनति वृत्रहेत्यत्र बहुलञ्छन्दसीति शपो लुगभावो बोध्यः ॥

वधादेशो न स्यादिति । लिङ्प्रकृतेः समुदायस्य हन्त्वाभावादुत्तरखण्डस्य तदादित्वाभावात्पूर्वखण्डस्य लिङ्परकत्वाभावादिति भावः । धित्वसिद्धिरिति । समुदायस्य धातुत्वाभावात्तदुत्तरस्यागन्तुकत्वेनार्थवत्वाभावाच्च तदप्राप्तिरिति भावः । उत्तरखंडेति । परस्यास्तेर्भूभावे कृते इति पूर्वोक्तभाष्यप्रामाण्यान्नानर्थकेतिवचने ऽनभ्यासविकार इति पर्युदासाच्चागन्तुकस्याप्युत्तरखण्डस्यार्थवत्वादि कल्प्यते । प्रत्येकं त-

प्रवृत्तिर्बोध्या ॥ भूसुवोरित्यस्य तदन्ताङ्गस्येत्यर्थात् प्राप्तस्य गुणनिषेधस्य बोभूत्विति नियम इति न तद्विरोधः। तस्माद्धन्तेर्यङ्लुकि वध्यादित्यादि माधवाद्युदाहृतं चिन्त्यमेवेत्यन्यत्र विस्तरः ॥

यदपि ननु वृद्धिर्यस्याचामादिरित्यत्रेक्परिभाषोपस्थितौ शालीयाद्यसिद्धिरत आह ॥

## विधौ परिभाषोपतिष्ठते नानुवादे ॥ १०२ ॥

अनूद्यमानविशेषणेषु तन्नियामिका परिभाषा नोपतिष्ठत इति तदर्थः ॥ विध्यङ्गभूतानां परिभाषाणां विधेयेनासिद्ध-

---

त्कल्पने तु बोधावृत्तिप्रसंग इति भावः। न चैवं प्रणिजगादेत्यत्र नेरुपसर्गस्य गदधातुपरकत्वाभावाण्णत्वाप्राप्तिरिति वाच्यम्। नेर्गदेत्यत्र षष्ठ्यर्थकसप्तम्याश्रयणेन गदादिनिरूपितोपसर्गस्य नेरित्यर्थेन व्यवधानेपि तत्प्रवृत्तेः सुवचत्वात्। अत एव प्रण्यगददित्यत्राड्व्यवधानेपि णत्वसिद्धिः। न तद्विरोध इति। परिभाषाभावेपीति शेषः। चिन्त्यमिति। किं तु लिङीत्यस्यार्धधातुके इत्यनेन सामानाधिकरण्याद्विषयसप्तम्यन्तत्वेन द्वित्वात्पूर्वं वधादेशे दीर्घोकित इति दीर्घे वावध्यादिति केचित्। अन्ये तु नुगत इत्यन्तरङ्गत्वान्नुकि जंवध्यादिति प्राहुः ॥ अपरे त्वनुनासिकान्तत्वस्य विनाशोन्मुखत्वेनाकृतव्यूहपरिभाषया नुकोप्रवृत्त्या दीर्घे जावध्यादिति वदन्ति ॥

शालीयाद्यसिद्धिरिति। यस्य समुदायस्याचाम्मध्ये आदिरिक्स्थानिका वृद्धिस्तद्वृद्धसंज्ञमित्यर्थे लैगवायनशब्दादावेव सा स्यादिति भावः। अनूद्यमानेति। साक्षादुद्देश्येत्यर्थः। स्वोपस्थाप्यार्थस्य साक्षादुद्देश्येन सहान्वये सति स्वस्य चारितार्थ्यं संभवति तत्रानूद्यमानवि-

तया सम्बन्धासम्भवे ऽपि तद्विशेषणे व्यवस्थापकत्वेन चरितार्थानां तद्विशेषणव्यवस्थापकत्वे मानाभाव इति तर्कमूलेयम् ॥ किञ्चोदीचामातः स्थाने इति सूत्रे स्थानेग्रहणमस्या लिङ्गम् । अन्यथा षष्ठी स्थाने इति परिभाषयैव तल्लाभे तद्वैयर्थ्यं स्पष्टमेवेति । तन्न । उदात्तस्वरितयोर्यण इत्यादौ ष्यङः संप्रसारणमिति सूत्रभाष्योक्तरीत्याल्लोपो ऽन इत्यादौ चैतस्या व्यभिचरितत्वात् । भाष्यानुक्तत्वाच्च । स्थानसंबन्धो न परिभाषालभ्य इत्यर्थस्य षष्ठी स्थाने इति सूत्रे भाष्ये स्पष्टमुक्तत्वेन त्वदु-

---

शेषणे स्वोपस्थाप्यार्थान्वयनियामिका सा परिभाषा न भवतीतिभावः।विध्यंगभूतानामिति । विधेयोपकारिकाणामित्यर्थः । असिद्धतयेति । तात्पर्यविषयत्वाभावेनेत्यर्थः । यत्र तु स्वोपस्थाप्यार्थस्य स्थाने इत्यादेरिकोयणचीत्यादौ विधेयेऽन्वयस्तात्पर्यविषयस्तत्र विधेयेन सह स्वोपस्थाप्यार्थस्य सम्बन्धो भवत्येवेति सूचितम् । तथा चायमर्थः । नाप्राप्तपरंपराधिकपरंपरया विधेयोपकारकत्वं परिभाषाणां न भवतीति । परिभाषायाः प्रधानीभूतविधेयोपकारे संपादनीये यावती परम्परा नाप्राप्ता ततोऽधिकपरंपरा यत्र शास्त्रे विधेयोपकारे तत्र शास्त्रे सा न प्रवर्तते इति यावत् । यथा षष्ठीस्थान इति परिभाषायाः स्वोपस्थाप्यार्थस्य साक्षादेव विधेयेनान्वयेनेकोयणचीत्यादौ चारितार्थ्यमित्युदीचामात इत्यादौ परंपरया विधेयोपकारकत्वविषये ऽस्याः प्रवृत्त्यभावात् स्थानेग्रहणं चरितार्थम् । तस्मिन्नितिपरिभाषाया इकोयणचीत्यादावुद्देश्यमात्रघटितपरंपरया विधेयोपकारस्थले चारितार्थ्यादल्लोपोन इत्यादौ तदधिकपरंपरया विधेयोपकारस्थले तस्या अप्रवृत्त्यापत्तौ ष्यङइति सूत्रस्थभाष्यविरोधः स्पष्ट एवेति दिक् । न परिभाषालभ्य इति । अन्तरङ्गत्वादेव स्थानपदार्थलाभेन सूत्रस्य निर्दिश्यमानपरिभाषार्थकथनपरत्वव्यवस्थापनादिति भावः ।

त्कज्ञापकासंभवाच्च । तत्र स्थानेग्रहणं तु स्पष्टार्थमेव ॥ किञ्च विधौपरिभाषेति प्रवाद इको गुणवृद्धी अचश्च इत्यनयोर्विधीयतइत्यध्याहारमूलको ऽन्यत्र तु नास्याः फलमित्यन्यत्र विस्तरः ॥ १०२ ॥

ननु नमस्करोति देवान्नमस्यति देवानित्यादौ नमः स्वस्तीति चतुर्थी दुर्वारेत्यत आह ।

## उपपदविभक्तेः कारकविभक्तिर्बलीयसी ॥ १०३ ॥

कारकविभक्तित्वं च क्रियाजनकार्थकविभक्तित्वं तच्च प्रथमाया अप्यस्तीति सापि कारकविभक्तिरिति स-

---

ज्ञापकासंभवाच्चेति । स्थानपदार्थस्यांतरंगत्वादेव लाभेन स्वांशे चारितार्थ्याभावादित्यर्थः । अध्याहारमूलक इति । न च तदध्याहारोप्येतन्मूलक एवेति वाच्यम् । गुणवृद्धिग्रहणानुवृत्त्यादिना तदर्थसिद्धौ सूत्रे पुनर्गुणवृद्धिग्रहणसामर्थ्येन, ह्रस्वादिग्रहणस्यानुवर्तमानस्यावृत्त्याचश्चेत्यत्रापि तदर्थस्य सिद्धेरिति बोध्यम् ॥ १०२ ॥

नमस्करोतीति । ननु नमःपदार्थेन्वयविवक्षायां चतुर्थी कृञ्धात्वर्थफलेन्वयविवक्षायां कर्मणिद्वितीयेति विषयभेदसत्वात्कथं तदापत्तिः । न च निपातानां द्योतकत्वेन नमःपदार्थनमस्कारस्यैव कृधात्वर्थफलत्वादेकार्थान्वयप्रयुक्तविभक्तिद्वयप्राप्त्या तदापत्तिस्सुवचा इत एव वारुचेर्नमस्यतीत्युक्तम्।अत्र हि मुण्डयतौ मुण्डस्येव नमःपदार्थस्य कृञर्थत्वेन विभक्तिद्वयप्राप्तिः सुलभेति वाच्यम् । नमःपदार्थे क्रियाकर्मभावसंबंधेनान्वयविवक्षायां द्वितीयाप्राप्तिरन्यसंबन्धेनान्वयविवक्षायां च चतुर्थीप्राप्तिरिति द्वयोरेकविषयाभावात्तदापादनस्याशक्यत्वादिति चेन्न । नमस्स्वस्तीत्यस्योद्देश्यतावच्छेदककुक्षौ संबन्धविशेषानुक्त्या क्रियाकर्मभावसंबन्धेनान्वयविव-

हयुक्ते इत्यादिसूत्रेषु भाष्ये ध्वनितम् ॥ इयं च वाचनिक्येव । अत एव यस्य च भावेन इति सप्तम्यपेक्षयाधिकरणसप्तम्या बलवत्त्वमनेन न्यायेन तत्र च दीयते इति सूत्रे भाष्ये ध्वनितं कैयटेन स्पष्टमुक्तम् । एतेन

---

क्षायामपि तत्प्रवृत्तेरत्र परत्वाच्चतुर्थ्यापादनस्य सुवचत्वात् । न चैवं चतुर्थ्या अपि क्रियाजनकार्थकविभक्तित्वरूपवक्ष्यमाणकारकविभक्तित्वेन परत्वाच्चतुर्थ्योपपत्तिर्दुर्वारेति वाच्यम् । क्रियाजनकत्वमात्रार्थकविभक्तेरेव कारकविभक्तित्वस्वीकारेण नमःस्वस्तीत्येतद्विहिताविभक्तेर्हरयेनम इत्यादौ क्रियाजनकत्वरूपार्थबोधकत्वाभावेन तन्मात्रार्थकत्वरूपोक्तकारकविभक्तित्वाभावात् । कर्मणिद्वितीयेतिसूत्रविहितद्वितीयायास्तु कदाप्यर्थान्तराबोधकत्वेन कारकविभक्तित्वस्य सुवचत्वात् । अत्र च क्रियाजनकत्वेन विवक्षितोर्थो ग्राह्यस्तेन मातुः स्मरतीत्यत्र वस्तुतो मात्रादेः क्रियाजनकत्वेपि न क्षतिरिति बोध्यम् । ध्वनितमिति । तत्र हि पुत्रेण सहागतः पितेत्यत्रोपपदविभक्तेरिति न्यायेन तृतीयां बाधित्वा प्रथमेत्युक्तम् । अन्यथा प्रथमार्थस्य तिङर्थकर्त्रादावन्वयेन क्रियान्वयित्वरूपकारकत्वाभावेन तदसंगतिः स्यादिति भावः । अत एवेति । उक्तकारकविभक्तित्वस्वीकारात्, अस्या वाचनिकत्वस्वीकाराच्चैवेत्यर्थः । कैयटेन च स्पष्टमुक्तमिति।तत्र हि दीयते कार्यमित्युभयमपि न कार्यम् । तत्र भव इत्यनेनैव सिद्धत्वात् । यच्च तत्र दीयते तत्र कार्यं वा तत्तत्र भवं भवत्येवेत्युक्त्वा तत्र भव इति सूत्रे तत्रेत्यस्योपपदविभक्तेरिति न्यायादौपश्लेषिकाधिकरणसप्तम्यन्तत्वकल्पनया तादृशसप्तम्यन्तादेव प्रत्ययोत्पत्तिरित्याशयेन यन्मासे गते सति दीयते तत्र ' तत्रभव ' इत्यस्याप्राप्त्या सूत्रावश्यकत्वम् । सूत्रसत्वे तु तत्सामर्थ्याद्यस्य च भावेनेति सप्तमीविषयेप्येतत्प्रवृत्तिरित्युक्तम् । तथा चानेन न्यायेन सौत्रविभक्तितात्पर्यनिर्णयस्तत्तद्विभक्तिसाधुत्वनिर्णयश्चेत्युभयमपि क्रियते । तत्राद्यांशे व्याख्यानं मूलं, द्वितीयांशस्तु वाचनिक एवेति बोध्यम् । परे तु द्वितीयांशः प्रधानन्यायमूलक एव । अत एव सहयुक्ते इतिसूत्रस्थप्रधानग्रहणप्रत्याख्यानं संगच्छते । निरुक्तरी-

क्रियान्वयित्वं कारकत्वमित्यपास्तं, यस्य च भावेनेति सप्तम्या अपि क्रियान्वयित्वात्। ये तु प्रधानीभूतक्रियासंबन्धनिमित्तकार्यत्वेन कारकविभक्तीनां बलवत्त्वं वदन्ति तेषामुभयोरपि क्रियासंबन्धनिमित्तकत्वेन तदसङ्गतिः स्पष्टैव। नमोवरिव इति सूत्रे नमस्यति देवानित्यादौ चतुर्थीवारणाय भाष्ये उपन्यासस्यासंगतेश्च ॥ एतेन क्रियाकारकसंबन्धो ऽन्तरंग इति तन्निमित्ता विभक्तिरन्तरंगोपपदार्थेन तु यत्किञ्चित्क्रियाकारकभावमूलकः संबन्ध

---

त्या त्वदुक्तकारकविभक्तित्वस्थले पुत्रेण सहागतमानयेत्यादौ कथंचिद्दोषवारणेपि पुत्रेण सहागतस्य पितुर्धनमित्यादौ पित्रादिशब्दात्तृतीयावारणस्याशक्यत्वमेव। एवं राज्ञः पुरुषमन्तरा न गच्छतीत्यादौ संबन्धप्रतियोगिवाचकादेव षष्ठीतिसिद्धान्तासिद्धिप्रसङ्गः। संबन्धस्योभयनिष्ठत्वेन संबंधिवाचकात् षष्ठीविधाने ऽविशेषाद् द्वाभ्यामपि षष्ठीप्रसंगस्य दुर्वारत्वात्। मन्मते तु पित्रादिपदात्पुरुषादिपदाच्च जायमानविभक्तेः प्रधानक्रियासंबन्धनिमित्तकतया कारकविभक्तित्वेनोक्तपरिभाषया स्वानुयोगिकसंबंधबोधकोक्ततृतीयाषष्ठीरूपोपपदविभक्त्यपेक्षया प्राबल्यबोधनेन बाधात् पितृपुरुषादिपदान्न तृतीयाषष्ठ्यादिविभक्त्यापत्तिसंभवः। अत्र कारकविभक्तित्वं च सापेक्षतया भिन्नं भिन्नम्। स्वार्थस्य यादृशपरंपरया प्रधानीभूतक्रियासंबंधित्वं ततो न्यूनपरंपरया प्रधानीभूतक्रियासंबंधवत्त्वं स्वापेक्षया कारकविभक्तित्वं तदपेक्षया च स्वस्या उपपदविभक्तित्वमिति पर्यवस्यति। न चैवं नमस्यति नमस्करोतीत्यादावपि नमस्काररूपफलसंबंधनिमित्तत्वस्योभयत्र साम्याद् द्वितीयायाः प्राबल्यमनुपपन्नमिति वाच्यम्। उभयोः फलसंबंधित्वमात्रेण साम्येपि कर्मसंज्ञायां प्रधानीभूतव्यापारस्यापेक्षितत्वेन द्वितीयायाः फलापेक्षयापि प्रधानीभूतव्यापारापेक्षितत्वेन बलवत्वस्य सुवचत्वात्। न च यस्यचभावेनेति सप्तम्यपेक्षयाधिकरणसप्तम्याः कारकविभक्तित्वप्रयुक्त-

इति तन्निमित्ता विभक्तिर्बहिरंगेत्यपास्तम् । नमस्यतीत्यत्र नमःपदार्थे ऽपि क्रियाकारकभावेनैवान्वयात् । अत्र च नमःपदार्थस्यापि क्रियात्वं मुण्डयतौ मुण्डस्येव ॥ सहयुक्ते इत्यादौ च प्रधाने प्रथमासाधनार्थमियं भाष्यउपन्यस्तेत्यन्यत्र विस्तरः ॥ १०३ ॥

नन्वदमुयङ्ङित्यादौ पूर्वस्यापि मुत्वापत्तिरत आह ॥

## अनन्त्यविकारे ऽन्त्यसदेशस्य ॥ १०४ ॥

---

बलवत्वकथनमयुक्तमुभयोरपि प्रधानीभूतक्रियासंबन्धनिमित्तकत्वादिति वाच्यम् । आद्यांशरूपायां व्याख्यानत इति परिभाषाशेषभूतायामुपपदविभक्तेरितिपरिभाषायां कारकविभक्तिपदेन कारकत्वव्याप्यकर्त्रादिषट्कान्यतमार्थबोधकविभक्तेर्ग्रहणेनादोषात् । निरुक्तद्वितीयांशबोधकैतत्परिभाषायां तु सहयुक्तेत्यादिसूत्रभाष्यविरोधेन तादृशकारकविभक्तित्वस्यास्वीकार एव । वस्तुतस्तु तत्र भव इत्यत्र व्याख्यानादधिकरणसप्तमीस्वीकारेणान्यसप्तम्यन्तात्तदप्रवृत्तेः फलान्तराभावेन नैतत्परिभाषान्तरस्य नोपयोगः । अत एव द्विर्वचनेचीत्यादौ तन्निमित्त इत्यर्थलाभः । तत्रचदीयते इतिसूत्रे कैयटेनैषा भाष्याशयप्रदर्शनाय दर्शितापि भाष्ये कुत्रापि स्पष्टं नोपलभ्यते इति बोध्यम् । न चैवमपि देवा नमस्क्रियन्त इत्यादौ कर्मप्रत्यये फलस्यैव प्राधान्येन तत्संबंधनिमित्तकचतुर्थ्यापत्तिर्दुर्वारेति वाच्यम् । कर्मप्रत्यये फलस्य कथंचिद्विशेष्यत्वेपि व्यापारस्य प्रधानत्वबाधे मानाभावात् । अत एव कर्मसंज्ञोपपत्तिः । अन्यथात्र व्यापारस्याप्रधानत्वेन प्रधानीभूतव्यापारप्रयोज्यफलाश्रयत्वप्रयुक्तायाः कर्मसंज्ञाया अप्रवृत्त्यापत्तिः, स्पष्टं चेदं सहयुक्तेतिसूत्रे भाष्यकैयटयोरिति वदन्ति ॥ १०३ ॥

मुत्वापत्तिरिति । न च परिभाषासत्वेप्यदस इति शास्त्रस्यामीत्या-

अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्प्राप्तावन्त्यसदेशस्यैवेति तदर्थः । अन्यथा धात्वादेर्नत्वसत्वे नेता सोतेत्यादावेव स्यातां न तु नमतिसिञ्चतीत्यादौ ॥ अनन्त्यविकार इति च लिंगम् ॥ अन्त्येन समानो दे-

---

दावन्त्यवर्णवृत्तिविकारप्रयोजकत्वेनैतत्परिभाषाप्रवृत्त्ययोगात्तदापत्तिर्दुर्वारेति वाच्यम् । अत्र विधेयभेदेन वाक्यभेदान्नत्वविधायकैतच्छास्त्रस्यांत्यवृत्तिविकाराप्रयोजकत्वेनांत्यसदेशस्यैव नत्वविधानात्पूर्वदस्य तत्प्राप्तेरभावात् । एवं च संनियोगशिष्टन्यायेनाकारे उत्वस्याप्यप्रवृत्तिरिति बोध्यम् । युगपत्प्राप्ताविति । क्वचिदिति शेषः । तेनामीत्यादौ तदसत्वेपि न क्षातिः । इति चेति । चेनांत्यसदेशानंत्यसदेशयोरिति प्रागुक्तसंग्रहः । तथा च यत्किंचिद्रूपविशिष्टे शास्त्रे ऽन्त्यसदेशस्येत्युपतिष्ठते इति परिभाषार्थः । वैशिष्ट्यं च स्वावच्छिन्ननिरूपितान्त्यवृत्तिविकाराप्रयोजकत्वं स्वावच्छिन्नान्त्यसदेशानन्त्यसदेशवृत्त्येककालिकप्राप्तिप्रयोजकत्वं स्वावच्छिन्ननिरूपितावयवत्वावच्छिन्नोद्देश्यताकत्वमिति संबन्धत्रयेण । अत्र रूपं चादशब्दत्वधातुत्वप्रातिपदिकत्वादि बोध्यम् । अत्र प्रथमसंबन्धनिवेशात् सुपोधात्वित्यादौ राजन् अस् पुरुष स् इत्येतत्प्रातिपदिकान्त्यसुवृत्तिविकारप्रयोजकत्वेन प्रातिपदिकत्ववैशिष्ट्याभावान्नानेनात्रांत्यसदेशस्येत्यस्योपस्थितिः । द्वितीयसंबंधनिवेशाच्च णोन इत्यादावेतदप्रवृत्तिः । णोन इत्यस्य नमननीत्येतत्समुदायांत्यवृत्तिविकाराप्रयोजकत्वादिसत्वेपि तस्य समुदायस्य स्वोद्देश्यतावच्छेदकत्वाभावेन स्वीयोद्देश्यतावच्छेदकधातुत्वावच्छिन्नांत्यसदेशानन्त्यसदेशोभयवृत्त्येककालिकप्राप्तिप्रयोजकत्वाभावेन चात्रैतदप्रवृत्तिरत एवात्र तृतीयसंबन्धनिवेश इति बोध्यम् । एवं चलीक्लृप्यते इत्यत्रापि चरीकृप् इतिसमुदायस्य कृपोरोलइतिशास्त्रीयोद्देश्यतावच्छेदकत्वाभावेन कृप्धातुत्वस्य तत्वेपि समुदाये धातुत्वाभावेन तदवच्छिन्ननिरूपितान्त्यसदेशानंत्यसदेशोभयवृत्त्येककालिकप्राप्तिप्रयोजकत्वाभावेन कृपोरोलइत्यत्रैतदप्रवृत्त्योभयत्र लत्वसिद्धिः । एतेनैतस्या अनित्यत्वेन कृपोरोल इत्यत्राप्रवृत्त्या चलीक्लृप्यत इत्यत्रो-

शो यस्य सो ऽन्त्यसदेशः । तत्वं चान्त्यवर्णतद्वर्णयोरितराव्यवधानेन बोध्यम् । अत एव विद्ध इत्याद्यर्थं न संप्रसारणे इति चरितार्थम् ॥ अल्लोपो न इत्यादेरनस्तक्षणेत्यादावाद्याकारादावप्रवृत्तिरप्यस्याः फलं, यजादिस्वादिपरानन्तांगस्याकारस्य लोप इत्यर्थस्यैवांगांशे प्रत्ययस्योत्थिताकांक्षतयौचित्यादङ्गावयवयजादिस्वादिपरस्यान इत्यादिक्रमेणानेकत्रानेकक्लिष्टकल्पनापेक्षयास्या उचितत्वात् ॥ न चैषा ष्यङः संप्रसारणम् इति सूत्रे भाष्ये प्रत्याख्यातेति भ्रमितव्यम् । वार्त्तिकोक्तफलानामने-

---

भयोर्लत्वसिद्धिरित्यपास्तम् । न चैवं मिमार्जिषतीत्यत्रैतदप्रवृत्त्यापत्तिरिति वाच्यम् । इष्टापत्तेः । अभ्यासे वृद्ध्यभावस्तु प्रत्ययस्य मृज्विशेषणत्वेन निर्दिश्यमानपरिभाषयार्थवद्ग्रहणपरिभाषयापि सिध्यतीति बोध्यम् । इतराव्यवधानेनेति । इतरपदेनाज् गृह्यते । तथाचा ऽज्व्यवधानशून्यत्वमन्त्यसदेशत्वं तेनादमुयङ्ङित्यत्र रेफव्यवधानेपि न क्षतिः । एवं हंसशिरांसीत्यत्रापि बोध्यम् । चरितार्थमिति । वस्तुतश्चिन्त्यमिदं, ष्यङः संप्रसारणमिति सूत्रे भाष्ये एनां परिभाषामुक्त्वा किमेतस्याः प्रयोजनमिति प्रश्ने नसंप्रसारणे इति सूत्रं न कर्तव्यं भवतीत्युक्त्या न संप्रसारण इति सूत्रसाध्यफलानामेतत्परिभाषासिद्धत्वबोधनेन तद्विरोधापत्तेः । वस्तुतस्तु कार्यिव्यवधानशून्यत्वमंत्यसदेशत्वम् । व्यधादावकारव्यवधानेपि यकारस्य कार्यिव्यवधानशून्यत्वादंत्यसदेशत्वासिद्ध्यानया वकारस्य संप्रसारणाप्राप्त्योक्तभाष्यं संगच्छते। न चैवं यून इत्यत्र यकारस्य कार्यिव्यवधानशून्यत्वेनांत्यसदेशतया संप्रसारणापत्तिरिति वाच्यम्। साक्षात् स्थानिद्वारा वा कार्यित्वस्यात्र ग्रहणेन यून इत्यत्रोकारे स्थानिद्वारा कार्यित्वस्य सत्वेनादोषात् । न चैमप्यनस आन् अन आन इत्यत्र तपरकरणेनाल्लोप इत्येतत्कार्यित्वस्याकारे ऽभावेन पूर्वानोऽत्यसदेशत्वेन लोपापत्तिरिति वाच्यम् । निरुक्तकार्यतावच्छेदकावच्छिन्नबोधकपदप्रतिपाद्यतावच्छे-

क्लिष्टकल्पनाभिरन्यथासिद्धिं प्रदर्श्यापि यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्त्तव्या प्रतिविधेयं दोषेषु, प्रतिविधानं चोदात्तनिर्देशात्सिद्धमित्युपसंहारात् ॥ मिमार्जिषतीत्यर्थं चैषा । तत्र वृद्धेः पूर्वमन्तरङ्गत्वाद् द्वित्वे परत्वादभ्यासकार्ये ततोभ्यासेकारस्य वृद्धिवारणायावश्यकी । न च वृद्धौ पुनरभ्यासह्रस्वत्वेन सिद्धिः। लक्ष्ये लक्षणस्येति न्यायेन पुनरप्रवृत्तेः ॥ यत्तु न संप्रसारण इति सूत्रे भाष्ये नैतस्याः परिभाषायाः प्रयोजनानीत्युक्तं तस्यायमर्थः । एतत्सूत्रे प्रयोजनान्येतस्याः परिभाषाया न भवन्ति व्यधादावन्त्यसमानदेशयणो ऽभावादिति । नैतान्येतस्याः प्रयोजनानीति पाठो ऽपि क्व चिद् दृश्य-

---

दकधर्मावच्छिन्नान्यत्वहितत्वरूपतत्त्वस्वीकारेणात्रानस्तादृशान्त्वरूपधर्मावच्छिन्नत्वेनादोषात् । भाक्षिप्तप्रत्ययेनानो विशेषणेन निर्दिश्यमानपरिभाषयां वोक्तदोषस्य सुनिवारत्वाच्चेतिदिक् । उदात्तनिर्देशादिति । यत्रैषा परिभाषिष्यते तत्रोदात्तनिर्देशः कर्तव्यः । अनन्त्यविकारेन्त्यसदेशस्योदात्तनिर्देश इति वक्तव्यमित्यर्थः । परे त्वेषा परिभाषा निष्फला । अत एव ष्यङ इतिं सूत्रे भाष्ये प्रत्याख्याता । अत एव च नोपधाया इत्यत्रोपधाग्रहणं तदोः सःसावित्यत्र तदोर्ग्रहणं च चरितार्थम् । मिमार्जिषतिअनस्तक्ष्णेत्यादि तु नास्याः फलमिति प्रागेवावोचाम । हंसशिरांसीत्यत्रापि सर्वनामस्थाने इत्यस्य श्रुतानुमितपरिभाषया सांतसंयोगविशेषणत्वस्वीकारेण निर्दिश्यमानपरिभाषया चोक्तदूषणवारणसंभवात् । अत एव ष्यङइतिसूत्रे भाष्ये नसंप्रसारणइतिसूत्रं न कर्तव्यं भवतीत्येवैतत्परिभाषाप्रयोजनमुक्तं न तु लक्ष्यसिद्धिरूपम् । सहेतुकं च वाक्यं भवति प्रमाणमिति भाष्योक्त्या नेत्येकेऽसेर्हि दृश्यते इत्यस्यैवात्र प्रमाणतया स्वीकारात् । पूर्वत्रारुचिसूचनायैवात्र मुख्यार्थैकेति पदोपादानम् । अत

ते ॥ वाचनिक्येवैषा । स्पष्टा च ष्यङ इति सूत्रे ऽदसो ऽसेरिति सूत्रे च केचिदन्त्यसदेशस्येत्यनेन भाष्यइत्यन्यत्र विस्तरः ॥ १०४ ॥

नन्वव्यक्तानुकरणस्यात इति पररूपं पटत् इति पटिटीत्यादावलो ऽन्त्यस्य इत्यन्त्यस्य प्राप्नोतीत्यत आह ॥

## नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ॥ १०५ ॥

अनभ्यासेत्युक्तेर्बिभर्तीत्यादौ भृञामित् इत्याद्यन्त्यस्यैव अभ्यासो ऽनर्थको ऽर्थावृत्त्यभावात् किं तूत्तरखण्ड एवार्थवानित्यन्यत्र निरूपितम् ॥ एषालोऽन्त्यात्सूत्रे भाष्ये स्पष्टा । फलानामन्यथासिद्धिकरणेन प्रत्याख्याता चेति

---

एवादसोसेरिति सूत्रे ऽदमुयङिति भवितव्यमित्युक्तम् । अमुमुयङिति चेष्यते इतिभाष्येणेच्छाविषयत्वमेव तत्रोक्तं न तु शास्त्रविषयत्वं तस्येति सूचितम् । अत एव न संप्रसारणइतिसूत्रे फलाभावादेषा भाष्ये प्रत्याख्यातेति प्राहुः ॥ १०४ ॥

प्राप्नोतीति । तथा च नाम्रेडितस्येति सूत्रेंत्यग्रहणं व्यर्थं स्यादिति भावः । अनभ्यासविकारइति । अत्र ज्ञापकसाजात्याद् विकारपदेन भावादेश एव गृह्यते । तेनात्रलोपोभ्यासस्य घ्वसोरेद्धावभ्यासलोपश्चेति सर्वस्यैवाभ्यासस्य भवतीति केचित् । अत्र ज्ञापकं च पूर्वोक्तमन्त्यग्रहण, मनभ्यासेत्यंशे चार्तिपिपर्त्योरिति निर्देशो ज्ञापक इति बोध्यम् । भाष्ये स्पष्टेति । तत्र वचनरूपेणोक्तेत्यर्थः । प्रत्याख्याता चेति । हलिलोपइत्यनेनान्त एव लोपः । वाम्रेडितस्येत्येव सिद्धे नाम्रेडितस्यान्त्यस्य तु वेति सूत्रकरणेनात्रालोंत्यपरिभाषा न प्रवर्तते इति स्वीकारान्न दोषः । मीनादीनामनुवृत्त्यैव सिद्धेरत्रग्रहणादत्रलोपोभ्यासेति सर्वादेशः । घ्वसो-

तत एवावधार्यताम् ॥ १०५ ॥

ननु ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेत्यादौ पुमान् स्त्रिया इत्येकशेषापत्तिः स्त्रीत्वपुंस्त्वातिरिक्तकृतविशेषाभावादत आह ॥

## प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः ॥ १०६ ॥

तेन प्रधानस्त्रीत्वपुंस्त्वातिरिक्ताप्रधानस्त्रीत्वपुंस्त्वकृतविशेषस्यापि सत्त्वेन न दोषः । स्पष्टा चेयं पुमान् स्त्रिया नपुंसकमनपुंसकेनेत्यनयोर्भाष्ये ॥ अन्तरङ्गोपजीव्यादपि प्रधानं प्रबलमिति हेतुमति च इत्यत्र भाष्यकैयटयोः ॥ १०६ ॥

---

रितिसूत्रे पुनर्लोपग्रहणाद् लोपशितिशित्करणाद्वा सर्वादेशः । श्वेतादीनां लोप इत्येव सिद्धे श्वेताश्वाश्वतरेत्यत्र पुनरश्वतरादीनां ग्रहणेन, चतुरश्छयतावित्यत्रादेरित्येव सिद्धेरक्षरग्रहणेन विभाषाभवदितिवार्तिके वस्येत्येव सिद्धेरवृग्रहणेन तत्सामर्थ्यादलोन्त्यपरिभाषाया अप्रवृत्तिरिति भावः ॥ १०५ ॥

अप्रधानेति । अत्राप्राधान्यं च तत्पदप्रयोज्यविशेष्यतानिरूपितप्रकारतावच्छेदकत्वरूपमिति भावः । एतद्बलादेव तस्माच्छसः स्वमोर्नपुंसकादित्यादौ प्रधानपुन्नपुंसकार्थे वर्तमानादित्यर्थेन राजभार्याः कुलपुत्र इत्यत्र नत्वामोरभावः सिध्यति । इयं च लोकसिद्धा, प्रधानानुसरणस्यागोपालाङ्गनं प्रसिद्धेरिति बोध्यम् । भाष्यकैयटयोरिति । तत्र हि अन्तरंगमुपजीव्यं च प्रयोज्यक्रियानिरूपितं कर्तृत्वं बाधित्वा प्रधानीभूतप्रयोजकक्रियापेक्षं कर्मत्वं प्रवर्तते इति गत्यादिसूत्रं नियामकमित्युक्तमित्यन्यत्र विस्तरः ॥ १०६ ॥

ननु स्वस्रादित्वप्रयुक्तो मातृशब्दस्य ङीब्निषेधः परिच्छेत्तृवाचकमातृशब्दे ऽपि स्यादत आह ॥

**अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ॥ १०७ ॥**

तेन शुद्धरूढस्य जननीवाचकस्यैव ग्रहणं न परिच्छेत्तृवाचकस्य ॥ योगजबोधे तदनालिङ्गितशुद्धरूढिजोपस्थितिः प्रतिबन्धिकेति व्युत्पत्तिरेव तद्बीजम् । रथकाराधिकरणन्यायसिद्धो ऽयमर्थः ॥ कश्चित्तु दीधीवेवीटाम् इत्यत्रानया परिभाषया दीधीङ्वेवीङोरेव ग्रहणं न दीङ्धीङ्वेङ्वीनामिति । तन्न । तथा सति दीवेधीवीटा-

---

अवयवप्रसिद्धेरिति । अवयवशक्तिग्रहाधीनतदुपस्थित्यपेक्षया तद्घटितनिष्ठशक्तिग्रहाधीनविशिष्टार्थोपस्थितिः प्रबलातो वाक्यार्थबोधे सैव प्रयोजिकेति परिभाषार्थः । तदनालिंगितशुद्धेति । तेन, योगरूढस्थले तदुपस्थितेर्योगार्थविषयकबोधे प्रतिबंधकत्वं नेति बोध्यम् । रथकारेति । वर्षासु रथकारो ऽग्नीनादधीतेत्यत्रोक्तयुक्तया रथकारपदेन समुदायनिष्ठशक्तिग्रहाधीनोपस्थितिविषयरूढ्यर्थजातिविशेषविशिष्टस्य शूद्रस्यैव ग्रहणं न तु रथनिर्मातुस्त्रैवर्णिकस्यावयवशक्तिग्रहाधीनशक्तिग्रहप्रयोज्योपस्थितिविषयस्येत्युक्तं तत्रेति भावः । वस्तुतस्त्विदं व्याख्यानं चिन्त्यं लोके योगजबोधे वक्तुस्तात्पर्येपि तदनापत्तेः । परे तु स्वस्रादिगणेर्थवद्ग्रहणपरिभाषयार्थवन्मातृशब्दस्य ग्रहणात् केनार्थेनार्थवतो ग्रहणमिति तात्पर्यसंदेहे योगार्थस्यावयवशक्तिग्रहाधीनशक्तिग्रहप्रयोज्योपस्थितिविषयत्वेन विलंबोपस्थितिकतया शीघ्रोपस्थितिकस्यावयवशक्तिग्रहानधीनशक्तिग्रहप्रयोज्योपस्थितिविषयस्य जननीरूपार्थस्य तत्र संबन्धेन पश्चादुपस्थितयोगार्थस्य निराकांक्षतया तत्र संबंधाभाव इति तर्कमूलेयम् ।

मित्येव वदेदित्यन्ये ॥ १०७ ॥

ननु वातायनार्थे गवाक्षे ऽवङो वैकल्पिकत्वाद् गोक्ष इत्याद्यपि स्यादत आह ॥

## व्यवस्थितविभाषयापि कार्याणि क्रियन्ते ॥ १०८ ॥

लक्ष्यानुसाराद्व्यवस्था बोध्या ॥ शाच्छोरिति सूत्रे लटः शत्रित्यादिसूत्रेषु च भाष्ये स्पष्टा ॥ १०८ ॥

## विधिनियमसम्भवे विधिरेव ज्यायान् ॥ १०९ ॥

नियमे ह्यश्रुताया अन्यनिवृत्तेः सामर्थ्यात्परिकल्प-

---

रथकाराधिकरणन्यायेनापि रूढ्यर्थे तात्पर्यमेव बोध्यते, न तु रूढिजोपस्थितेर्योगार्थबोधे प्रतिबन्धकत्वं मानाभावादुक्तदूषणग्रासाच्चेति दिक् ॥ १०७ ॥

व्यवस्थितविभाषयापीति । क्व चिदिति शेषः । विकल्पविषये सर्वत्र भावाभावयोः पर्यायेण प्रवृत्तिर्युक्ता । द्वयोरप्युद्देश्यतावच्छेदकावच्छेदेन विधानात् । क्व चित्तु तयोरन्यतरस्य लक्ष्यानुरोधात्संकोचः क्रियते इतिपरिभाषार्थः । तदाह । लक्ष्यानुरोधादिति । तानि च भाष्याभिमतानि लक्ष्याणि देवत्रातो गलो ग्राह इत्यादिनावङ्सूत्रे शब्देन्दुशेखरे स्पष्टानीत्यन्यत्र विस्तरः ॥ १०८ ॥

विधिनियमसंभवे इति । अपूर्वविधिनियमविधित्वयोः संभवे ऽपूर्वविधित्वकल्पनमेव युक्तमिति परिभाषार्थः । अत्र शास्त्रे नियमविधिपदेन तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते इति जैमिनीयपरि-

नमुक्तानुवाददोषश्चेति लाघवाद्विधिरेवेति बोध्यम् ॥ यस्य हल इत्यत्र इजादेः सनुम इत्यादौ च भाष्ये स्पष्टेयम् ॥ १०९ ॥

नन्वाशंसायां भूतवच्चेत्यनेन लुङ इव लङ्लिटोरप्यतिदेशः स्यादत आह ॥

## सामान्यातिदेशे विशेषानतिदेशः ॥ ११० ॥

सामान्योपस्थितिकाले नियमेन विशेषोपस्थापकसामग्र्यभावो ऽस्या बीजम् । तेनानद्यतनभूतरूपे विशेषे विहितयोस्तयोर्नातिदेशः । इयमनित्या न ल्यपीति लिं-

---

भाषितपरिसंख्याविधिर्गृह्यते । अश्रुताया अन्यनिवृत्तेरिति । इदं च विधिमुखेन प्रवृत्तौ बोध्यम् । निषेधमुखेन प्रवृत्तौ तु भवतीत्यस्य न भवतीत्यर्थकल्पनेनेतोपि गौरवमिति भावः । यस्य हल इत्यत्र भाष्ये इति । तत्र हि अत इत्यस्य संबन्धान्नियामकत्वमुत तदसंबंधात्सर्वस्य लोपविधायकमिति संदिह्यापूर्वविधिर्भविष्यति न नियम इत्युक्तम् । एवं हेताविति सूत्रस्य लौकिकहेतुग्रहणेन विध्यर्थत्वमेव न तु तत्प्रयोजकोहेतुश्चेति कर्तृसंज्ञकहेतोर्ग्रहणेन हेतोश्चेत्तृतीया तर्हि कर्तृसंज्ञकादेवेति नियमार्थत्वमिति दिक् ॥ १०९ ॥

सामान्यातिदेशे इति । सर्वातिदेशविषय इदम् । तथा च सादृश्यप्रतियोगितावच्छेदकधर्मतद्व्यापकधर्मतद्धर्मप्रयुक्तकार्याणामतिदेशे संभवति न तद्व्याप्यधर्माणां तद्धर्मप्रयुक्तकार्याणामतिदेश इति परिभाषार्थः । तेन कार्यातिदेशविधायकेनाशंसायामित्यनेन भूतत्वरूपतादृशसामान्यधर्मप्रयुक्तलुङतिदेश एव । ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यामिति समान्यं यद् ब्राह्मणकार्यं तदेव क्षत्रिये ऽतिदिश्यते न तु माठरादिब्राह्मणविशेषनिष्ठमित्येतल्लोकन्यायसिद्धेयम् । नल्यपीति । स्थानिवद्भावे-

ङ्गात् । तेन स्थानिवत्सूत्रेण विशेषातिदेशो ऽपि ॥ स्पष्टं चैतत सर्वं स्थानिवत्सूत्रे भाष्ये ॥ ११० ॥

ननु तित्स्वरितमिति स्वरितत्वं चिकीर्षतीत्यादौ स्यादत आह ॥

## प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम् ॥ १११ ॥

इयं चाङ्गस्येति सूत्रे भाष्ये पठिता । वर्णग्रहणे च न प्रवर्तते इति तत्रैव कैयटे स्पष्टम् । अत एव सनाशंसभिक्ष उः वले इत्यत्र सन्वलयोः प्रत्यययोर्ग्रहणम् ॥ परे तु तित्स्वरितमिति सूत्रएषा परिभाषा लक्ष्यसंस्काराय भाष्ये क्वापि नाश्रितेति कैयटेनोक्तम् । अङ्गस्येति सूत्रे तत्प्रत्याख्यानायैषा भाष्यएकदेशिनोक्ता । अत

---

न कित्वमाश्रित्य प्राप्तस्य घुमास्थेतीत्त्वस्यानेन निषेधः क्रियते । क्त्वात्वस्य किदकित्साधारणत्वेन तद्विशेषधर्मस्य कित्वस्यातिदेशासंभवेनोक्तनिषेधवैयर्थ्यमितिभावः।विशेषातिदेशोपीति । परे तु सामान्यतः स्थानिवृत्तिधर्मातिदेशस्वीकारे तावित्यत्र त्यदाद्यकारस्यापि जराशब्दत्वातिदेशापत्त्या जरसादेशापत्तिरतः संग्राहकवाक्यस्यावृत्त्या तल्ल्यबादेशस्तत्क्त्वावद्भवतीत्यर्थस्यावश्यकत्वेन प्रदायेत्यत्र कित्वस्य तत्क्त्वात्वव्यापकतयातिदेशसंभवेन नल्ल्यपीत्यस्य चारितार्थ्येनोक्तार्थज्ञापकत्वासंभव इत्याहुः ॥ ११० ॥

वर्णग्रहणे च नेति । तेनास्यच्व्रावितीत्वं शुक्लीभवतीत्यादावप्रत्ययस्यापि भवति । अत एवेति । एतत्परिभाषास्वीकारादेवेत्यर्थः । एकदेशिनेति । अब्भक्षेत्यत्रापोभीतितादेशमाशंक्य वर्णग्रहणेप्यनया समाहि-

एव तिति प्रत्ययग्रहणं कर्तव्यमिति वार्तिककृतोक्तम् ॥ उक्तसूत्रयोर्व्याख्यानात् प्रत्यययोरेव ग्रहणमित्याहुः॥१११॥

ननु विपराभ्यां जेरित्यात्मनेपदं परा सेना जयतीत्यर्थके परा जयति सेनेत्यत्र प्राप्नोतीत्यत आह ॥

## सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ॥ ११२ ॥

तेन विशब्दसाहचर्यादुपसर्गस्यैव पराशब्दस्य ग्रहणमिति तत्रैव भाष्ये स्पष्टम् ॥ सहचरणं सदृशयोरेवेति

---

तत्वात्तत्वमितिभावः । वार्तिककृतेति । भाष्याकृता च दिवउदित्यादौ दित्वमाश्रित्य तत्प्रत्याख्यातं नत्वेनामाश्रित्येति बोध्यम् । आहुरिति । केचित्तु वसुस्रंस्वित्यत्र परसाहचर्याद्वसुधातोर्ग्रहणवारणायैषा अवश्यमाश्रयणीया । अत एव वनोरच वसोः संप्रसारणमित्यादौ वन्वसोः प्रत्ययस्यैव ग्रहणम् । दिवउदित्यादौ तकारविशिष्टस्य उशब्दस्य तत्काले शक्तिरित्यभिप्रायेण तकारस्येत्संज्ञायां तित्स्वरप्राप्तौ तितिप्रत्ययेति वार्तिकोपन्यसनम् । सिद्धान्ते तपरसूत्रेण तकाररहिते एव शक्तिबोधने तु तस्यानवयवत्वात्तित्स्वरितमित्यस्याप्राप्तिरिति न तद्विरोधः । किं च तितीति वार्तिकं लुग्विकरणपरिभाषया पिबतेर्ग्रहणं कर्तव्यमितिवार्तिकमिव प्रकृतपरिभाषाया अवयुत्यानुवादः । तत्प्रत्याख्यानपरं भाष्यं च तत्सूत्रे ऽस्याः प्रयोजनं नास्तीत्यभिप्रायकमिति न कश्चिद्दोष इत्याहुः ॥ १११ ॥

विशब्दसाहचर्यादिति । ननु विशब्दस्य पक्षिवाचकस्यापि सत्वेन कथमुपसर्गग्रहणमिति चेन्न । पराशब्दसाहचर्याद्विशब्दो ऽपक्षिवाची गृह्यते स चोपसर्ग एव । तथाभूतविशब्दसाहचर्याच्च पराशब्द उपसर्गो गृह्यत इति परस्परसाहचर्याश्रयणेनादोषात् । एवं रामलक्ष्मणावित्यत्रापि रामसाहचर्याद् दुर्योधनापत्यभिन्नो लक्ष्मणो गृह्यते स च दशरथापत्य

सहचरितशब्देन साहश्यवानुच्यते । रामलक्ष्मणावित्यादावपि साहश्यमेव नियामकम् । सहशयोरेव सहविवक्षा तयोरेव सहप्रयोग इत्युत्सर्गाच्च ॥ ध्वनितं चेदं कर्मप्रवचनीययुक्ते द्वितीयेति सूत्रे भाष्ये । तत्र हि पंचम्यपाङ्परिभिरिति सूत्रेण लक्षणादिद्योतकपरियोगे पञ्चमीमाशङ्क्य यद्यप्ययं परिर्दृष्टापचारो वर्जने चावर्जने चाऽऽयं खल्वपशब्दो ऽदृष्टापचारो वर्जनार्थ एव कर्मप्रवचनीयस्तस्य को ऽन्यः सहायो भवितुमर्हत्यन्यो वर्जनार्थाद्यथास्य गोः सहायेनार्थ इति गौरेवानीयते नाश्वो न गर्दभ इत्युक्तम् । तेन हि सहशानामेव प्रयोगे सहायभावो बोधितः ॥ द्विस्त्रिश्चतुरिति सूत्रे साहचर्येणैव कृत्वोऽर्थस्य ग्रहणे सिद्धे कृत्वोऽर्थग्रहणादेषाऽनित्या । तेन

---

एव प्रसिद्धस्तत्साहचर्याच्च जामदग्न्यबलरामभिन्नो रामो गृह्यते इति बोध्यम् । साहचर्यस्य लोके ऽभिधानियामकत्वमित्येतन्मूलिकेयम् । तदुक्तमभियुक्तैः । संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिंगं शब्दस्यान्यस्य संनिधिः । सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव इति । अत्रापि साहचर्यं सादृश्यमेवेत्याह । सादृश्यमेव नियामकमिति । एतदर्थकरणे प्रमाणमाह । ध्वनितमिति । दृष्टापचार इति । परिशब्दो वर्जनतदभावयोर्लोके दृष्टव्यवहारोपशब्दः पुनर्लोके वर्जनएव दृष्टव्यवहार इत्यर्थः । अनित्येति । वस्तुतस्त्वनित्यत्वकल्पनापेक्षया यत्राप्रवृत्तिरिष्टा तत्रान्यधर्मेण सादृश्यं ग्राह्यं, द्विस्त्रिरित्यत्र सुजन्तत्वेन साहचर्यग्रहणापत्त्या चतुष्पञ्चाशदित्यादिसुजर्थबहुव्रीहौ षत्वानापत्तिरतः कृत्वोर्थग्रहणमिति

दीधीवेवीटामित्यत्र धातुसाहचर्ये ऽप्यागमस्येटो ग्रहण-मित्यन्यत्र विस्तरः ॥ ११२ ॥

नन्वस्थीत्यनङ् प्रियसक्थ्ना ब्राह्मणेनेत्यत्र न स्यादङ्गस्य नपुंसकत्वाभावादत आह ॥

## श्रुतानुमितयोः श्रुतसंबन्धो ब-लवान् ॥ ११३ ॥

श्रुतेनैव संबन्धो नानुमितेन प्रकरणादिप्राप्तेनेत्यर्थः । प्रकरणादितः श्रुतेर्बलवत्त्वादिति भावः । एवं च तत्र लिंगमस्थ्यादीनामेव विशेषणं नाङ्गस्य, शिशीलुग्नुम्विधिषु तु गृह्यमाणस्याभावात् प्रकरणप्राप्ताङ्गस्यैव विशेषणम् । अत एव वा नपुंसकस्येति सूत्रं वा शाविति न कृतम् । तत्र

---

भावः । दीधीवेवीटामित्यत्र हलनुबंधकसाहचर्यादागमस्यैवेटो ग्रहणं न तु धातोरिति बोध्यम् ॥ ११२ ॥

बलवानिति । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षादित्यनेन श्रुत्यपेक्षया लिंगस्य दुर्बलत्वबोधनादस्थ्यादीनां श्रुतत्त्वेन प्रथममुपस्थित्या नपुंसकपदार्थस्य तेन सहान्वये स्वरितत्वादिना लिंगेन पश्चादुपस्थितस्यांगस्य तदन्तस्य च निराकांक्षत्वान्नान्वय इति न्यायमूलेयम् । अनुमितेनेति । लैङ्गिकेनेत्यर्थः । प्रकरणादिप्राप्तेनेत्यर्थस्तु न युक्तः । प्रयाजादाविवोभयाकांक्षारूपपारिभाषिकप्रकरणस्यात्रासंभवात् । गृह्यमाणस्याभावादिति । श्रुतानुमितयोः संबन्धप्राप्तौ श्रुतसंबन्धस्य बलवत्त्वमिति परिभाषार्थादत्र श्रुतसंबंधासंभवादेवाश्रुतेन अंगेन तदंतेन सह तत्संबंध इति भावः । न्यायसिद्धेर्थे ज्ञापकमप्याह । अत एवेति । शत्रंतस्येति । शतृरूपस्यांगात्यस्येत्यर्थः । तथा चानुवर्तमा-

नपुंसकग्रहणं हि गृह्यमाणस्य शत्रन्तस्यैव नपुंसकत्वे यथा स्याद् बहवो ददतो येषु तानि कुलानि बहुददतीत्यत्र मा भूद्, बहूनि ददन्ति येषु ते बहुददन्त इत्यत्र यथा स्यादित्येवमर्थम् ॥ स्पष्टं चेदं स्वमोर्नपुंसकादित्यत्र भाष्ये ॥ के चित्वचो रहाभ्यां द्वे इत्यत्र श्रुतेन रेफस्य निमित्तत्वेन यरन्तर्भावादनुमितं कार्यित्वं बाध्यत इत्येतदुदाहरणमाहुः । तन्न । तक्रकौण्डिन्यन्यायेन्व सिद्धेरित्यन्यत्र विस्तरः ॥ ११३ ॥

ननु तत्पुरुषे तुल्यार्थ इति स्वरः परमेण कारकेण परमकारकेणेत्यादौ स्यात्तथा गातिस्थाघुपाभूभ्य इति लुक् पैओवैशोषणइत्यतः कृतात्वात्परस्यापि स्यादत आह॥

## लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ॥ ११४ ॥

लक्षणं लाक्षणिकमुपचारात्।।तत्ताद्विभक्तिविशेषाद्यनुवादे-

---

नेन शतृपदेन श्रुतत्वात् पूर्वं नपुंसकस्य संबंधः पश्चादश्रुतेनानुवर्तमानेनांगेन सह शत्रभिन्ननपुंसकस्य संबंधः । एतेन शत्रंगयोरुभयोरपि प्रकरणप्राप्तत्वाविशेषान्न प्रकृतपरिभाषाविषयः । शत्रंतांतोपस्थित्यपेक्षया शत्रंतस्य पूर्वमुपस्थितिरिति त्वन्यादित्यपास्तम् ॥ तक्रकौंडिन्यन्यायेनेति । वस्तुतस्त्वत्र न तक्रन्यायस्य विषयः किं तु माठरपरिवेषणन्यायस्येति तत्रैव विस्तरेण निरूपितम् ॥ ११३ ॥

उपचारादिति । लक्षणयां अर्शआद्यजंतत्वकल्पनया वा लक्षणपदं

न विहितो हि समासादिः प्रतिपदोक्तस्तस्यैव ग्रहणं शीघ्रो-पस्थितिकत्वात् । द्वितीयो हि विलम्बोपस्थितिकः । पै इत्यस्य पा इति रूपं लक्षणानुसंधानपूर्वकं विलम्बोपस्थितिकं पिबतेस्तु तच्छीघ्रोपस्थितिकम् । इदमेव ह्येतत्परिभाषा-

---

लाक्षणिकेत्यर्थबोधकमित्यर्थः । प्रतिपदोक्तत्वं च स्वीयोद्देश्यतावच्छेदक-ज्ञानायोपयुज्यमानानुपूर्वीमत्पदघटितशास्त्रविधेयत्वम् । तत्पुरुषेतुल्यार्थेति शा-स्त्रीयोद्देश्यतावच्छेदकतृतीयांतत्वज्ञानायोपयुज्यमानानुपूर्वी तृतीयात्वरूपा तद्वत्तृतीयापदघटित 'तृतीयातत्कृतार्थे' तिशास्त्रविधेयत्वं तृतीयातत्पुरुष-स्यैव न तु विशेषणंविशेष्येति कर्मधारयादेरिति समन्वयः । एवं गा-तिस्थेतिशास्त्रीयोद्देश्यतावच्छेदकज्ञानायोपयुज्यमानानुपूर्वी पात्वरूपा तद्व-त्पापदघटितशास्त्रं पापानइति तद्विधेयस्य पाशब्दस्यैव ग्रहणं नत्वा-देच इतिशास्त्रविहितस्य पैधातुनिष्पन्नपाशब्दस्येति बोध्यम् । नन्वेवं प्रतिदोक्तत्वस्वीकारे त्यदादीनाम इत्यादाविक्पदानुपस्थितये इकोगुणे-तिसूत्रे पूर्वसूत्रतो गुणादिपदानुवृत्तिकरणं भाष्योक्तमसंगतं स्यात् । लक्षणप्रतिपदोक्तपरिभाषया तु नात्र निर्वाह इति शेखरग्रन्थविरोधश्च । इकोगुणेति शास्त्रीयोद्देश्यतावच्छेदकज्ञानायोपयुज्यमानानुपूर्वी गुणादि-शब्दत्वरूपा तद्वद्गुणादिपदघटितं सार्वेत्यादिशास्त्रं तद्विधेयगुणादेरेव प्र-तिपदोक्तत्वात् ग्रहणेन त्यदादीत्यादिविहितगुणादेरग्रहणादेव तत्र वार-णसंभवादिति चेन्न । स्वीयोद्देश्यतावच्छेदकं रूपं यत्र साक्षादन्यशास्त्र-विधेयवृत्ति तत्रैतत्परिभाषाप्रवृत्तिस्वीकारेण इकोगुणेतिशास्त्रीयोद्देश्यता-वच्छेदकगुणशब्दत्वादेस्सार्वेत्याद्यन्यशास्त्रीयविधेये साक्षादवृत्तित्वेन तत्रै-तत्परिभाषाप्रवृत्तेरभावेनादोषात् । अत एव च गतिकारकपूर्वपदस्येत्यत्र प्रतिपदोक्तपरिभाषाया अप्रवृत्त्या बहुव्रीहेरपि ग्रहणेनाध्यै प्रध्यै इति-भाष्योक्तबहुव्रीहौ यण्सिद्धिरिति केचित् । परे तु स्वविशिष्टं स्वघ-टकपदेन प्रतिपदोक्ततया गृह्यते । वैशिष्ट्यं च स्वीयोद्देश्यतावच्छेदकरूपा-वच्छिन्नविधेयताश्रयत्वं स्वीयोद्देश्यतावच्छेदकसमर्पकज्ञानविषयीभूतानुपूर्वी-विशिष्टविधेयताश्रयत्वमित्युभयसंबंधेन । अत्र वैशिष्ट्यं च स्वावच्छिन्नत्व-

बीजम् ॥ इयं च वर्णग्रहणे ऽप्योत्सूत्रे भाष्ये संचारितत्वात् । यत्तु वर्णग्रहणे नैषादेच इत्यत्रोपदेशग्रहणादिति, तत्तु तस्मिन्नेव सूत्रे शब्देन्दुशेखरे दूषितमिति तत एव द्रष्टव्यम् ॥ अनित्या चेयं भुवश्च महाव्याहृतेरिति महाव्याहृतिग्रहणादित्यन्यत्र विस्तरः ॥ ११४ ॥

नन्वेवं देङो दोधातोश्च कृतात्वस्य घुसंज्ञा न स्यात्तथा मेङ आत्वे प्रणिमातेत्यादौ नेर्गदनदेति णत्वं न स्यात्तथा गैइत्यस्यात्वे घुमास्थेतीत्वं न स्यादत आह ॥

## गामादाग्रहणेष्वविशेषः॥११५॥

---

स्वावच्छिन्नपदप्रयोज्योद्देश्यतानिरूपितत्वैतदन्यतरसंबंधेन। आद्यसंबंधदानेन गतिकारकेत्यत्र प्रतिपदोक्तग्रहणासंभवेनाविशेषाद् द्वयोर्ग्रहणम् । द्वितीयसंबंधदानेन स्वघटकपदवृत्त्यानुपूर्वीमत्पदघटितशास्त्रविधेयस्य ग्रहणात् विभाषादिक्समासइत्यत्र दिङ्नामानीतिबहुव्रीहेरेव ग्रहणम् । अत्रोद्देश्यतावच्छेदकसमर्पकज्ञानविषयीभूतेति विशेषणदानेन तृतीयासमासे इति शास्त्रीयोद्देश्यतावच्छेदकसर्वादित्वज्ञानायोपयुज्यमानानुपूर्वी पूर्वत्वादिरूपा तदवच्छिन्नोद्देश्यता पूर्वसदृशेतिशास्त्रीया तन्निरूपिताविधेयताश्रयसमासस्यैव प्रतिपदोक्तत्वात्तत्र ग्रहणम् । स्वावच्छिन्नत्वनिवेशाद् गातिस्थेत्यादौ पिबतेर्ग्रहणम् । संचारितत्वादिति । अदोभवदित्यत्र प्रगृह्यत्वमाशंक्य ओतश्चिवप्रतिषेध इतिवार्तिकप्रत्याख्यानायैषा तत्रोपन्यस्तेति बोध्यम् । दूषितमिति । के चित्तु फलाभावाद्वर्णग्रहणे एतदप्रवृत्तिः । अदोभवदित्यादौ गौणमुख्यन्यायेन तद्वारणपरभाष्येण पूर्वभाष्यस्यैकदेशित्वबोधनादिति प्राहुः । अनित्येति । तेन भोभगोइतिसूत्रे लाक्षणिकानामपि वार्तिकनिष्पन्नानां ग्रहणं सिद्धम् । के चित्तु धाग्रहणेन धेटो ग्रहणमिति प्राहुः ॥ ११४ ॥

अत्र च ज्ञापकं दैपः पित्वम् । तद्धचदाविति सामान्यग्रहणार्थम् । अन्यथा लाक्षणिकत्वादेव विधौ तदग्रहणे सिद्धे किं निषेधे सामान्यग्रहणार्थेन पित्वेन, तेन चैकदेशानुमतिद्वारा संपूर्णा परिभाषा ज्ञाप्यते॥इयं च लक्षणप्रतिपदोक्तपरिभाषानिरनुबन्धकपरिभाषालुग्विकरणपरिभाषाणां बाधिका । दाधाघ्विति सूत्रे भाष्ये स्पष्टा ॥ गातिस्थेति सूत्रे इणादेशगाग्रहणमेवेष्यत इति न दोष इत्यन्यत्र विस्तरः ॥ ११५ ॥

ननु वृद्ध्यादिसंज्ञाः समुदाये स्युरत आह ॥

## प्रत्येकं वाक्यपरिसमाप्तिः ॥ ११६ ॥

---

गामादाग्रहणेष्विति । न च धेटो धाशब्दस्य लाक्षणिकत्वेन घुत्वानापत्तिः । न च गामादानां ग्रहणं यस्मिन्नितिबहुव्रीह्याश्रयणेन दाघटितदाधाघ्वितिशास्त्रे एतदप्रवृत्तिस्वीकारेणादोष इति वाच्यम् । घुमास्थेत्यत्र पैधातोरपि ग्रहणापत्तेरिति वाच्यम् । गामादिग्रहणस्य धेटोप्युपलक्षणत्वेनादोषात् । के चित्तु दोदद्घोरिति सूत्रे धेटो व्यावृत्तये कृतेन दाग्रहणेन धाग्रहणेप्यविशेष इतिपरिभाषान्तरं ज्ञाप्यते । अन्यथा धाञो ह्यादेशेन बाधात्तदप्राप्तौ धेटोपि प्रतिपदोक्तत्वेनाग्रहणे तद्वैयर्थ्यापत्तिः स्पष्टैवेति प्राहुः ॥ परे तु दाशब्दस्य ग्रहणं यस्मिन्निति बहुव्रीहिणा दाशब्दघटितस्य दाधाघ्वितिसूत्रस्य संग्रहः । तथा च गामाशब्दविषये दापदघटितसूत्रे च लक्षणप्रतिपदोक्तपरिभाषालुग्विकरणपरिभाषानिरनुबन्धकपरिभाषा नोपतिष्ठन्ते इति परिभाषार्थः । तेन धेटोपि ग्रहणसिद्धिरिति वदन्ति ॥ ११५ ॥

देवदत्तादयो भोज्यन्तामित्यत्र भुजिवत् ॥ ११६ ॥

नन्वेवं संयोगसंज्ञासमाससंज्ञाभ्यस्तसंज्ञा अपि प्रत्येकं स्युरत आह ॥

## क्वचित्समुदायेऽपि ॥ ११७ ॥

गर्गाः शतं दण्डयन्तामर्थिनश्च राजानो हिरण्येन भवन्तीत्यादौ दण्डनवत् ॥ लक्ष्यानुरोधेन च व्यवस्था ॥ ११७ ॥

ननु यू स्त्र्याख्यावित्यत्र व्यक्तिपक्षे दीर्घनिर्देशादणत्वेन ग्राहकसूत्राप्राप्त्योदात्ताद्यन्यतमोच्चारणेऽन्यस्वरकस्य संज्ञा न स्यादत आह ॥

## अभेदका गुणाः ॥ ११८ ॥

असति यत्ने स्वरूपेणोच्चारितो गुणो न भेदको

---

वाक्यपरिसमाप्तिरिति । वाक्यजन्यबोधविषयतापर्याप्तिस्तद्घटकेषु भवतीत्यर्थः । भुजिवदिति । षष्ठ्यन्तादृत्तिः ॥ ११६ ॥

समुदाये इति । अभ्यस्तसंज्ञायामुभेग्रहणात् द्वित्वं, समाससंज्ञायां सहग्रहणात्संयोगसंज्ञायामनन्तरेतिपर्युदासाच्चानयोस्साहित्यमुद्देश्यतावच्छेदकतया विवक्षितमिति न प्रत्येकं ताः संज्ञा इति भावः ॥ अर्थिन इति । वाक्यशेषबोधितप्राधान्यवतः शतस्याप्रधानगर्गानुरोधेन नावृत्तिरिति भावः । व्यवस्थेति । साहित्यस्योपलक्षणत्वविशेषणत्वाभ्यामेतन्न्याययोर्व्यवस्थेत्यर्थः ॥ ११७ ॥

अन्यस्वरकस्येति । अनुनासिकादेरुपलक्षणमिदम् । संज्ञा न स्यादिति । विरूपत्वेन स्वरूपमित्यनेन ग्रहणासंभवादिति भावः । परिभा-

न विवक्षित इत्यर्थः ॥ अत्र चास्थिदधीत्यादावनङादेरुदात्तस्यैवोच्चारणेन सिद्ध उदात्तग्रहणं ज्ञापकम् ॥ स्वरूपेणोच्चारित इत्युक्तेरनुदात्तादेरन्तोदात्तादित्युदात्तादिशब्दोच्चारणे विवक्षैव। उञः ऊँ इत्यत्राननुनासिक एवोच्चारणीये यत्नाधिक्येनानुनासिकोच्चारणाद्विवक्षा बोध्या। पथिमथ्यृभुक्षामित्यादौ स्थान्यनुरूपतयानुनासिक एवोच्चारणीये निरनुनासिकोच्चारणात्तद्विवक्षा। एतदर्थमेवासति यत्न इत्युक्तम् ॥ न चैवमस्थ्यादीनां नब्विषयस्येत्याद्युदात्ततयान्त्यादेशस्यानङः स्थान्यनुरूपे ऽनुदात्तएवोच्चारणीय उदात्तोच्चारणं विवक्षार्थं भविष्यतीति कथमस्य ज्ञापकत्वमिति वाच्यम्। परमास्थिशब्दादावन्तोदात्त उदात्तगुणकस्यापि स्थानित्वेन विवक्षायां

---

षासत्वे तु गुणातिरिक्तवैरूप्यप्रयोजकधर्माभाववत एव स्वरूपमित्यनेन ग्रहणमितिबोध्यम्। स्वरूपेणेति। असति यत्न इत्यस्यैवावयुत्यानुवादोयम्। अनुदात्तादेरित्यत्राजादेरित्येवानुदात्तादेः सिद्धया तत्रानुदात्तादिपदस्यैव यत्नरूपत्वात्। ज्ञापकमिति। न च ज्ञापितेपि तद्व्यर्थं भाव्यमानत्वेनान्यगुणकस्याप्राप्तेरिति वाच्यम्। भाव्यमानपरिभाषायाः स्वरत्वव्याप्यधर्मविषये ऽप्रवृत्तेः पूर्वमुपपादितत्वात्। अत एव बहुवचनेझल्येदित्यनेनोदात्तादिगुणकैकारविधानसिद्धिरित्यन्यत्र विस्तरः ॥ अनुनासिके एवोच्चारणीयइति। न च पथीयतेः क्विपि पन्था इत्यादौ स्थानिनो निरनुनासिकस्यापि संभवादिदमसंगतमिति वाच्यम्। तस्यानभिधानेनादोषात्। स्पष्टं चैतत्तत्रैव सूत्रे शेखरशब्दरत्नयोरिति बोध्यम्। स्थान्यनुरूपे इति। यथा वधादौ हन्त्यनुरूपे ऽन्तोदात्ते उ-

मानाभावात् ॥ चतसर्याद्युदात्तनिपातनं करिष्यते वधादेश आद्युदात्तनिपातनं करिष्यते पदादयो ऽन्तोदात्ता निपात्यन्ते सहस्य स उदात्तो निपात्यत इत्यादिभाष्यं त्वेकश्रुत्याष्टाध्यायीपाठे क्वचिदुदात्ताद्युच्चारणं विवक्षार्थमित्याशयेन । त्रैस्वर्येण पाठ इति पक्षे तु ज्ञापकपरं भाष्यमिति कैयटादयः ॥ परे तु निपातनं नामान्यादृशे प्रयोगे प्राप्ते ऽन्यादृशप्रयोगकरणं तत्तद्रूपाद्यत्नास्तत्रतत्रोदात्तादिविवक्षा । तिसृचतसृत्यत्र द्वन्द्वप्रयुक्ते ऽन्तोदात्त उच्चारणीय आद्युदात्तोच्चारणमन्यत्र स्थान्यनुरूपे स्वर उच्चारणीये तत्तदुच्चारणं विवक्षार्थम् ॥ संपूर्णाष्टाध्याय्याचार्येणैकश्रुत्या पठितेत्यत्र न मानम् । क्वचित्पदस्यैकश्रुत्यापि पाठो यथा दाण्डिनायनादिसूत्र ऐक्ष्वाकेति । यद्यप्यध्येतार एकश्रुत्यैवाङ्गानि पठन्ति ब्राह्मणवत्तथापि व्याख्यानतो ऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुः ॥ विधेयाण्विषये त्वप्रत्यय इति निषेधान्न गुणाभेदकत्वेन सवर्णग्रहणम् । अत एव घटवदित्यादौ

---

च्चारणीये आद्युदात्तोच्चारणं विवक्षार्थमितिभावः । न च हन्धातुरेकाच्त्वादंतोदात्त आद्युदात्तश्चेत्याद्युदात्तवधादेशोच्चारणमपि तदनुरूपमेवेत्येतदसंगतमिति वाच्यम् । वधादेशस्य स्थानिवत्त्वेन धातुत्वाद्धातोरित्यंतोदात्तस्योचिततयाद्युदात्तोच्चारणस्य तदनुरूपत्वाभावात् । हन्धातोर्वस्तुत आदेरुदात्तत्वेपि धातोरित्यनेनान्तोदात्तत्वेनैव साधुत्वविधानात् तेन रूपेणैव तस्याभिव्यक्तेस्तादृशे वधादेशे कर्तव्ये आद्युदात्तो-

मतोर्मस्य नानुनासिको वकारः । अत एव तद्वानासामिति सूत्रनिर्देशः । अन्यथा प्रत्यये भाषायामिति नित्यमनुनासिकः स्यात् । जातिपक्षे तु नास्योपयोग इति बोध्यम् । यू इत्यादौ दीर्घमात्रवृत्तिजातिनिर्देशान्न क्षतिरित्यन्यत्र विस्तरः ॥ ११८ ॥

ननु सर्वनामानीत्यत्र णत्वाभावनिपातनेऽपि लोके सणत्वप्रयोगस्य साधुत्वं स्यादत आह ॥

## बाधकान्येव निपातनानि ॥ ११९ ॥

तत्तत्कार्ये नाप्राप्ते निपातनारम्भात् । पुराणप्रोक्ते-

---

च्चारणं विवक्षार्थमित्याशयादिति दिक् ॥ तद्वानासाविति । नन्वत्र तसौमत्वर्थइत्यत्र दकारप्रश्लेषेण भत्वान्न दोष इति चेन्न । असुब्वत इतिभाष्योदाहृतस्योपलक्षणत्वेनादोषात् । ननु जातिपक्षे यूस्त्र्याख्याविति त्यत्र ह्रस्वस्यापि ग्रहणं स्यादित्वादिजातेस्तत्र सत्त्वादित्यत आह । दीर्घमात्रवृत्तीति । दीर्घनिर्देशसामर्थ्याद्दीर्घमात्रवृत्तिजातिरेव विवक्षितेति भावः ॥ ११८ ॥

णत्वाभावनिपातनेति । न च णकारघटिता यत्र संज्ञा लोके प्रसिद्धा तत्रैव णत्वस्य साधुत्वमत एव रघुनाथादिशब्दे णत्वं न, तथा च प्रकृतेपि णत्वघटितस्य तस्य लोके ऽभावान्न णकारघटितस्य साधुत्वमिति वाच्यम् । सर्वनामसंज्ञायाः पाणिनिकल्पितत्वेन शास्त्रानुसारिसंज्ञाकरणस्यौचित्यात् णत्वघटितसंज्ञाकरणे तु तेनैव लोकेपि संज्ञिबोधसंभवात् णघटितस्य साधुतापत्तेरित्याशयात् । पृषोदरादित्यादिति ।

ष्विति निपातितपुराणशब्देन पुरातनशब्दस्य बाधः प्राप्तोऽपि पृषोदरादित्वान्नेति बोध्यम् । पुराणेति पृषोदरादिः पुरातनेति चेत्यन्ये ॥ इयं सर्वादिसूत्रे भाष्ये स्पष्टा ॥ अबाधकान्यपि निपातनानीति तु भाष्यविरुद्धम् ॥ ११९॥

ननूखधातोर्द्वित्वे स्वत एव ह्रस्वत्वात्पूर्वमभ्यासह्रस्वाप्रवृत्तौ हलादिःशेषे सवर्णदीर्घे ह्रस्वापत्तिरत आह ॥

## पर्जन्यवल्लक्षणप्रवृत्तिः॥१२०॥

---

पुरातनशब्दे निपातनात्प्राप्तस्तकारलोपः पृषोदरादिषु पाठसामर्थ्यात्पक्षे न भवतीत्यर्थः । अन्ये इति । पृषोदरादिषु पुराणपुरातनयोर्द्वयोरापि पाठेनोभयसिद्ध्या निपातनक्लेशो नेत्यास्मिन् पक्षे लाघवं बोध्यम् । अबाधकान्यपीति । पुरातनशब्दस्य लोके साधुत्वार्थं वृत्तिकृतैतदुक्तम् । अत एव श्रावणीत्यपि सिध्यति । भाष्यविरुद्धमिति । सर्वादिसूत्रस्थभाष्यविरुद्धमित्यर्थः । तत्र हि बाधकानि निपातनानीति स्वीकारे अपरस्पराः क्रियासातत्ये इति निपातनात्समो मस्य लोपेन सततशब्दस्य लोके साधुत्वेपि संततशब्दस्यासाधुत्वापत्तिरित्युक्त्वा समोवाहितततयोरितियत्नान्तरस्वीकाराभिप्रायेण समाहितम् ।अबाधकानीत्यस्य सत्वे तु तेनैव संततशब्दस्यापि साधुत्वसिद्धौ समोवेतिवचनारंभेण समाधानासंगत्यापत्या तद्विरोधः स्पष्ट एव । श्रावणीति तु पृषोदरादित्वात्साध्विति तदाशयः । के चित्तु विभाषाफाल्गुनीतिनिर्देशज्ञापितस्य पौर्णमास्यामयं लुब्नेति निषेधस्य तत्रैव सूत्रे श्रवणेति निर्देशेनानित्यत्वज्ञापनात् श्रावणीति सिध्यतीति वदन्ति ॥ अतिशायने इतिदीर्घनिपातनाल्लोके ऽतिशयनशब्दोऽसाधुरेवेति दिक् ॥ ११९ ॥

ह्रस्वत्वे कृते इति । दीर्घात्पूर्वमांगत्वादिति भावः । कृतकारीति । उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य वाक्यमर्यादासिद्धत्वेन तन्मूलैषेति भावः । ननु पर्जन्यदृष्टान्ते तस्य तात्कालिकफलाजनकत्वे-

एवं च ह्रस्वस्यापि ह्रस्वे कृते लक्ष्येलक्षणस्येति न्यायेन न पुनर्ह्रस्वः। तदुक्तमिकोझलिति सूत्रे भाष्ये। कृतकारि खल्वपि शास्त्रं पर्जन्यवदिति । सिद्धेऽपि ह्रस्वादिकारीत्यर्थः ॥ न च लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरित्यत्र न मानमिति वाच्यम् । समो वा लोपमेक इति लोपेनैकसकारस्य द्वित्वेन द्विसकारस्य पुनर्द्वित्वेन च त्रिसकारस्य सिद्धौ संस्कः सुटीति सूत्रस्यैव मानत्वात् । संप्रसारणाच्च सिचि वृद्धिरित्यादौ भाष्ये स्पष्टमुक्तत्वाच्च ॥ अत्र विकारकृतो लक्ष्यभेदो नेति सिचि वृद्धिरिति

---

पि पूर्णजलाशयस्य परिरक्षणादिरूपभाविफलजनकत्वस्य सत्वेनात्र तत्प्रवृत्तिरनुचिता । अत एव भाष्ये 'अकृतकारि खल्वपि शास्त्रमग्निवत्' यथाग्निर्दग्धं न दहति तथा शास्त्रमपि कृतं न करोतीत्युक्तमिति चेन्न । ऊखतुरित्यत्रापि ह्रस्वस्य ह्रस्वविधाने लक्ष्येलक्षणन्यायेन दीर्घोत्तरं पुनर्ह्रस्वाप्रवृत्तिरूपफलस्य सत्वेन पर्जन्यदृष्टान्तस्य सूपपादत्वात् । अत एव मोराजीत्यनेनानुस्वारनिवृत्तिरूपफलसत्वात् सिद्धस्यापि मकारस्य पुनर्मकारविधानमुपपद्यते । यत्र तु सर्वथा फलाभावो यथा रमाणामित्यत्र नामीतिदीर्घप्रवृत्तेस्तत्राग्निदृष्टान्तेनास्तु तदप्रवृत्तिः । प्रकृते तूद्देश्यतावच्छेदकावच्छेदेनान्वयस्य क्लृप्तस्य त्यागे मानाभाव इति दिक् । विकारकृत इति । तेनोदवोढामित्यत्र वृद्धौ कृतायां तल्लक्ष्यत्वेन पुनः सा नेति भावः । इदमागमकृतस्याप्युपलक्षणम् । अत एव सर्वेषामित्यत्र पुनः सुडागमो नेति बोध्यम् । तल्लक्ष्यत्वं च स्वीयप्राथमिकप्रवृत्तावुद्देश्यतावच्छेदकावच्छेदेनाश्रीयमाणो यावान् शब्दसमुदायस्तद्विशिष्टाघटितत्वे सति स्वीयप्राथमिकप्रवृत्तिपूर्वकालिकप्राप्तिविषयाघटितत्वम् । वैशिष्ट्यं च स्वाघटकत्व स्वघटकमात्रोद्देश्यकविकारागमातिरिक्तत्वैतदुभयसंबंधेन । सुध्युपास्येत्यत्र अनचिचेतिशास्त्रप्रवृत्तौ पदत्वरूपस्वीयो-

द्देश्यतावच्छेदकरूपेणाश्रीयमाणसमुदायः सुध् य् इति तदघटकत्वं यद्यपि द्वित्वनिष्पन्ने द्वितीयधकारेस्ति तथापि द्वितीयसंबन्धाभावात्तदुभयसंबंधेन तादृशसमुदायविशिष्ट उदासीनस्तदघटितत्वं सुध् ध् य् इत्यस्येति तल्लक्ष्यत्वान्न पुनर्द्वित्वं धस्येति समन्वयः । यून इत्यत्र श्वयुवेति शास्त्रीयवकारनिष्ठप्राथमिकप्रवृत्तिपूर्वकालिकप्राप्तिर्यकारनिष्ठा तद्विषयाघटितत्वाभावेन तल्लक्ष्यत्वाभावात् पुनस्संप्रसारणप्राप्तौ न संप्रसारणेसंप्रसारणमितिनिषेधश्चरितार्थः । एतत्सूत्रमेवात्र लक्षणे तन्निवेशे मानम् । अत एव भूयादित्यत्र सकारद्वयस्य लोपः सिद्ध्यति । मात्रपदनिवेशात् काण्डेइत्यादौ तल्लक्ष्यत्वाभावेन पुनः प्राप्तस्य ह्रस्वस्य प्रकारान्तरेण वारणपरं भाष्यं संगच्छते । षड् ध् संत इत्यत्र खरिचेत्यस्य प्राथमिकी धकारनिष्ठा प्रवृत्तिस्तत्पूर्वकालिकप्राप्तिर्डकारनिष्ठा, धुट्प्रवृत्तेः पूर्वं डकारे खरिचेत्यस्य प्राप्तिसत्वात्, तादृशप्राप्तिविषयडकारघटितत्वेन तल्लक्ष्यत्वाभावाद् डकारे चर्त्वं सिध्यति । न चैवमपि या सेत्यादौ टापा सहैकादेशोत्तरं पुनस्त्यदाद्यत्वापत्तिः कांडे इत्यनेन तुल्यत्वादिति वाच्यम् । नपासयोरिति निर्देशेन टापा सहैकादेशस्थले तल्लक्ष्यत्वज्ञापनेनादोषात् । मात्रपदघटितनिवेशेन स्वोद्देश्यकाविभक्त्यनुद्देश्यकत्वस्य ग्रहणेन टावैकादेशस्य स्वघटकमात्रोद्देश्यकविकारत्वेन तादितराघटितत्वरूपतल्लक्ष्यत्वसत्वेनादोषाच्च । न च दीव्यतीत्यत्र श्यन्प्रवृत्त्युत्तरं दीव्येतिसमुदायस्य तल्लक्ष्यत्वाभावेन पुनः श्यनापत्तिः । श्यनः स्वीयप्राथमिकप्रवृत्तावाश्रीयमाणदिव्तीतिसमुदायाघटकत्वेन तत्समुदायघटकमात्रोद्देश्यकविकारेतरत्वेन च स्वविशिष्टत्वात् । न च विकारपदेन प्रत्ययस्यापि ग्रहणेनादोष इति वाच्यम् । हेतुमण्ण्यन्तस्य तल्लक्ष्यत्वापत्त्या पुनस्ततो हेतुमण्णिचोऽनुत्पत्तिप्रसंगादिति वाच्यम् । विशिष्टपदेनैतल्लक्षणे विकरणेतरस्य ग्रहणेनादोषात् । श्यनादीनां प्रत्ययत्वेन स्वप्रकृतिभूतधात्वर्थप्रत्यायकतया कर्त्रर्थत्वाभावेन पुनस्तत्प्राप्तेर्दुर्वचत्वाच्च । भाष्यगूढार्थविदस्तु तच्छास्त्रस्य प्रथमप्रवृत्तौ यद्व्यक्तेः स्वघटकेन येन पदेन ग्रहणं पुनः प्रवृत्तौ तेन पदेन तद्व्यक्तेस्तद्व्यक्तिविकारस्य तद्व्यक्त्युद्देश्यकागमविशिष्टस्य ग्रहणं न भवतीति लक्ष्येलक्षणन्यायार्थः । दीव्यतीत्यत्र दिव्शब्दस्य प्रथमप्रवृत्तौ दिवादिशब्देन ग्रहणेन पुनः प्रवृत्तौ दिवादि-

भाष्यात्प्रतीयतइत्यन्यत्र विस्तरः ॥ १२० ॥

ननु स्यन्दूधातोः स्यन्त्स्यतीत्यादावात्मनेपदनिमित्तत्वाभावनिमित्तत्वान्न वृद्भ्यश्चतुर्भ्य इति निषेधस्य बहिरङ्गत्वेनान्तरंगत्वादूदिल्लक्षणस्येड्विकल्पस्यापत्तिरत आह ॥

---

शब्देन दिव्शब्दस्य ग्रहणाभावेन न द्वितीयश्यन्प्रत्ययापत्तिः । हेतुमण्णिविषये तु धातुशब्देन पूर्वप्रवृत्तौ णिप्रकृतेर्ग्रहणं पुनः प्रवृत्तौ तु ण्यंतस्येति लक्ष्यभेदः स्पष्ट एव । षट्त्संत इत्यत्र खरिचेत्यस्य प्रथमप्रवृत्तौ धस्य झल्पदेन ग्रहणं द्वितीयप्रवृत्तौ तु तद्विकारस्य खर्पदेन ग्रहणमिति न न्यायविषयः । नन्वेवं भूयादित्यत्र स्कोरिति भवेदित्यत्र लिङःसलोपेति च सकारद्वयलोपानापत्तिः । आद्ये प्रथमप्रवृत्तौ पदपदेन यस्य समुदायस्य ग्रहणं द्वितीयप्रवृत्तावपि तेनैव पदपदेन तस्य ग्रहणात् । द्वितीयेपि लिङ्पदेनैव तस्य समुदायस्य प्रवृत्तिद्वयेपि ग्रहणादिति चेन्न । अत्र प्रथमप्रवृत्तौ यस्येत्यत्र यत्पदेन तच्छास्त्रीयैककालिकप्राप्तिविषयानेकाघटितस्य ग्रहणेनाद्ये भूयास्स्त् इतिसमुदायस्य पदपदेन गृहीतस्य स्कोरितिशास्त्रीयैककालिकप्राप्तिविषयसकारद्वयघटितत्त्वेन द्वितीये यास्स्त् इति समुदायस्य लिङ्पदेन गृहीतस्य तादृशसकारद्वयघटितत्वेन चोक्तन्यायविषयत्वाभावात् । प्रथमप्रवृत्यैव सकारद्वयनिवृत्तिरिति प्राचीनमते शंकाया अनुदयाच्च । एवं यून इत्यादावपि बोध्यम् । अत एव लिटिधातोरिति सूत्रे ऽनभ्यासग्रहणप्रत्याख्यानपरं भाष्यं संगच्छते । अन्यथा यङंतप्रकृतिकण्वन्ताच्चङि शास्त्रान्तरेण द्वित्वप्राप्त्यैतन्न्यायविषयाभावेन पुनर्द्वित्ववारणाय तदावश्यकतया प्रत्याख्यानासंगतिः स्पष्टैव । एवं नोनूयतेर्लिटि छान्दसत्त्वादामभावे नोनावेत्यत्र प्रथमप्रवृत्तावुकारस्यैकाज्घटकाच्पदेन ग्रहणात्तद्विकारस्य ओकारस्य पुनः प्रवृत्तावच्पदेन ग्रहणाभावेन नोशब्दस्य पुनर्द्वित्वं नेत्यादि सुध्युपास्यशब्दे शब्दरत्नप्रकाशे विस्तरेण निरूपितं सर्वमवगन्तव्यमिति प्राहुः ॥ १२० ॥

## निषेधाश्च बलीयांसः ॥१२१॥

अन्तरङ्गादुपजीव्यादपि बलीयांस इत्यर्थः ॥ चतुर्भ्ये इति तु स्पष्टार्थमेव । अत एव तत्प्रत्याख्यानं भाष्योक्तं सङ्गच्छते ॥ अत एव सवर्णसंज्ञादेर्निषेधविषये न विकल्पः । अन्यथा मीमांसकरीत्या विधेरुपजीव्यत्वेन प्राबल्यात्तस्य सर्वथा बाधानुपपत्त्या दुर्वारः स इति मञ्जूषायां विस्तरः । अत एव द्वन्द्वे च विभाषा जसीति चरितार्थम् ॥ विध्युन्मूलनाय प्रवृत्तिरस्या बीजम् ॥ न लुमता कमेर्णिङित्यनयोर्भाष्ये स्पष्टैषा ॥ १२१ ॥

नन्वत्यन्तस्वार्थिकानामर्थप्रत्यायकत्वरूपप्रत्ययत्वानुपपत्तिरत आह ॥

## अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ॥ १२२ ॥

---

बलीयांस इति । ननु चतुर्ग्रहणसामर्थ्यादेवेण्निषेधे सिद्धे एषा व्यर्थेत्यत आह । चतुर्भ्ये इति । उपजीव्यत्वेनेति । विधिशास्त्राभावे निषेधरूपाभावस्य प्रतियोग्यप्रसिद्ध्या ऽभावस्याप्रसिद्धिः स्यादिति भावः । द्वंद्वे चेति । द्वन्द्वे विकल्पविधायकं विभाषाजसीति चरितार्थमित्यर्थः । अन्यथा द्वंद्वेचेति निषेधस्य स्वोपजीव्यसर्वनामसंज्ञायाः सर्वथा बाधानुपपत्त्यैव पर्यायसिद्धौ विभाषाजसीतिसूत्रारम्भो व्यर्थ एव स्यादिति भावः। नलुमतेति । तत्र हि उत्तरपदत्वे चापदादिविधाविति वार्तिकस्य प्रत्याख्यानप्रस्तावे निषेधाश्च बलीयांस इत्यनेनासर्वनामस्थानइति प्रतिषेधः प्राप्नोतीत्युक्तम् । कमेर्णिङिति । तत्र हि ङ्कितिचेत्यत्रेग्ग्रहणाननुवृत्तिमते णिङो णकारस्य णेरनिटीत्यत्र सामान्यग्रहणार्थत्त्वेन ङकारस्यात्मनेपदा-

यस्यार्थः प्रकृत्या प्रत्याय्यते सोऽपि प्रत्यय इत्यस्याप्यङ्गीकारात्तस्य प्रत्ययत्वमिति न दोषः।स्वार्थ इत्यस्य स्वीयप्रकृत्यर्थ इत्यर्थः ॥ महासंज्ञाबलादर्थाकाङ्क्षायामन्यानुपस्थितिरस्या बीजम् ॥ सुपि स्थ इत्यादिसूत्रेषु भाष्ये स्पष्टैषा ॥ १२२ ॥

## योगविभागादिष्टसिद्धिः ॥१२३॥

इष्टसिद्धिरेव न त्वनिष्टापादनं कार्यमित्यर्थः । तत्तत्समानविधिकद्वितीययोगेन विभक्तस्यानित्यत्वज्ञापनमेतद्बीजम् ॥ १२३ ॥

## पर्यायशब्दानां लाघवगौरवचर्चा

---

र्थत्वेन च सावकाशत्वात् कामयते इत्यत्रानया वृद्धिनिषेधः प्राप्नोतीत्युक्तम् । यद्यपीदमेकदेशि भाष्यं तथापि भाष्यानुक्तत्वेनाप्रामाण्यशंकानिरासार्थतयैतदुपन्यसनं सार्थकमिति बोध्यम् ॥ १२१ ॥

सोपीति।अपिना स्वार्थपरिग्रहः।तथा च स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकत्वं प्रत्ययत्वमित्यर्थः । अन्यानुपस्थितिरिति । उपस्थितं परित्यज्येति न्यायादिति भावः । सुपिस्थ इति । तत्र हि स्थ इति योगविभागेनाखूत्थ इत्यस्य साधनावसरे भावार्थकत्वमेव कप्रत्ययस्य न त्वन्यार्थकत्वमित्युक्तम् ॥ १२२ ॥

इष्टसिद्धिरिति । विश्वतोमुखत्वात्सूत्राणां योगविभागेप्याचार्यतात्पर्यत्तिनेष्टसिद्धिरेव नानिष्टापादनमित्यर्थः । अत एवात इति योगविभागेन क्त्व इत्यादावेव लोपो न तु हाहाशब्दादाविति भावः । तदुक्तमभियुक्तैः । अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुरिति । विश्वतोमुखत्वं योगविभागादिभिरनेकार्थबोधकत्वमिति तद्व्याख्यातारः ॥ १२३ ॥

# नाद्रियते ॥ १२४ ॥

तत्रतत्रान्यतरस्यां विभाषा वेति सूत्रनिर्देशज्ञापितमिदम् ॥ १२४ ॥

# ज्ञापकसिद्धं न सर्वत्र ॥ १२५ ॥

स्पष्टमेव पठितव्ये ऽनुमानाद् बोधनमसार्वत्रिकत्वार्थमित्यर्थः । तेन ज्ञापकसिद्धपरिभाषयानिष्टं नापादनीयमिति तात्पर्यम् । भाष्ये ऽपि ध्वनितमेतन् ङ्याप्सूत्रादौ ॥ ज्ञापकेति न्यायस्याप्युपलक्षणम् ॥ न्यायज्ञापकसिद्धानामपि केषाञ्चित्कथनमन्येषामनित्यत्वबोधनायेति भावः । यथा तत्स्थानापन्ने तद्धर्मलाभ इति न्यायसिद्धं स्थानिवत्सूत्रं, ज्ञापकसिद्धं च तत्रानल्विधाविति ॥ १२५ ॥

ननु द्रोग्धा द्रोग्धा द्रोढाद्रोंढेत्यादौ घत्वादीनामसिद्ध-

---

लाघवगौरवचर्चेति । लाघवगौरवविचार इत्यर्थः । तथा च पर्यायशब्देषूच्चारणगौरवेणार्थांतरकल्पनाभिनिवेशो न कार्य इति भावः । बहुलशब्दस्य विकल्पार्थकत्वेपि वाशब्दपर्य्यायत्वाभावेन मघवाबहुलमित्यत्र बहुलग्रहणसामर्थ्यादर्थान्तरकल्पनं नैतद्विरुद्धमिति ध्येयम्॥१२४॥

असार्वत्रिकत्वार्थमिति । तेनापपरीत्यनेन बहिर्योगे ज्ञापिता पंचमी कस्य बहिरित्यत्र नेति बोध्यम् । ध्वनितमिति । तत्र ज्ञापकेन लिंगविशिष्टपरिभाषामुक्त्वानया द्विषतीताप इत्यत्र द्विषत्परयोरिति नेति सूचितम् । ज्ञापकसिद्धं च तत्रेति । ल्यपि क्त्वावृत्तितादित्वस्य स्थानिवत्त्वादेव लाभे ल्यब्ग्रहणमुक्तपरिभाषायां ज्ञापकम् । तेनाल्विधौ स्थानिवद्भावनिषेधज्ञापने तु ल्यपि तादित्त्वाभावेनादोजग्धिरित्यस्याप्राप्त्या प्रजग्ध्येत्यत्र जग्ध्यादेशार्थं ल्यब्ग्रहणमावश्यकमिति भावः ॥ १२५ ॥

त्वात्पूर्वं द्वित्वे एकत्र घत्वमपरत्र ढत्वमित्यस्याप्यापत्तिरत आह ॥

## पूर्वत्रासिद्धीयमद्वित्वे ॥ १२६ ॥

द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमसिद्धमित्यर्थः । पूर्वत्रासिद्धमित्यधिकारभवं शास्त्रमस्या लिङ्गम् ॥ यत्र च सिद्धत्वासिद्धत्वयोः फले विशेषस्तत्रैवेयम् । कृष्णर्द्धिरित्यादौ जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषाभावेन नास्याः प्रवृत्तिरित्यन्यत्र विस्तरः ॥ सर्वस्य द्वे इति सूत्रे भाष्ये स्पष्टेयम् ॥ १२६ ॥

ननु गोष्वश्वेषु च स्वामीत्यादिवद् गोष्वश्वानां च स्वामीत्यपि स्यात्स्वामीश्वरेति सूत्रेण षष्ठीसप्तम्योर्विधानादत आह ॥

## एकस्या आकृतेश्चरितः प्रयोगो

---

द्वित्वभिन्ने इति । द्वित्वे कर्तव्ये त्रैपादिकासिद्धत्वं नेति तु नार्थः । तथा सति दुग्धभ्यामित्यादौ बकारद्वित्वोत्तरमुत्वे तत्पूर्वबकारश्रवणापत्तेः । अत्र द्वित्वपदेनाष्टमिकं पदद्वित्वं वर्णद्वित्वं षाष्ठद्वित्वं च गृह्यते विनिगमनाविरहादिति स्पष्टमाकरे । अत एव वाक्क् इति भाष्योक्तं द्वित्वोदाहरणं संगच्छते । इयं चानित्या उभौसाभ्यासस्येति लिंगादित्यन्यत्र विस्तरः ॥ नमुने इत्यत्र नेति योगविभागोस्या ज्ञापक इति केचित् । अन्ये तु ग्राहकसूत्रे ऽजिति वक्तव्ये ऽणुग्रहणमस्या ज्ञापकम् । तद्धि सय्ँयन्ता विद्वाल्लिँखतीत्यादावनुनासिकयवलानां यत्त्वबोधनद्वारा द्वित्त्वार्थम् । एतत्परिभाषाया अभावे तु द्वित्त्वात्पूर्वं परसवर्णस्य दौर्लभ्यात्तद्वैयर्थ्यापत्तिः स्पष्टैवेति प्राहुः ॥ १२६ ॥

एकस्या आकृतेरिति । अस्यां यत्र तत्रेति शेषः । आकृतिः श्रा-

## द्वितीयस्यास्तृतीयस्याश्च न भविष्यति ॥ १२७ ॥

यत्रान्याकृतिकरणे भिन्नार्थत्वसंभावना तद्विषयोऽयं न्याय इत्यन्यत्र विस्तरः ॥ कृञ्चानुप्रयुज्यते इति सूत्रे भाष्ये स्पष्टेयम् ॥ १२७ ॥

ननु विव्याधेत्यादौ परत्वाद्धलादिःशेषे वस्य संप्रसारणं स्यादत आह ॥

## संप्रसारणं तदाश्रयं च कार्यं बलवत् ॥ १२८ ॥

तदाश्रयं संप्रसारणाच्चेति पूर्वरूपम् ॥ वस्तुतो लिट्यभ्यासस्येति सूत्रे उभयेषांग्रहणस्योभयेषां संप्रसारणमेव यथा स्यादित्यर्थकत्वेनेदं सिद्धमित्येषा व्यर्थेति

---

वणप्रत्यक्षविषयतावच्छेदको धर्मः । आश्रये चोपचारात्प्रयोगः । तस्य चार्थवत एव व्याख्यानाद् ग्रहणम् । तथा च यत्र वाक्ये यदर्थकय-द्धर्मवतः प्रयोगो ऽस्ति तत्र वाक्ये तदर्थकतद्धर्मवत एव सति संभवे प्रयोगो भवति न तु तदर्थकभिन्नधर्मवत इति परिभाषार्थः । भिन्नार्थत्वसंभावनेति । तथा च समानार्थकसमानधर्मवति एकस्मिन् तात्पर्याव-धारणे ऽन्यत्र तादृशे शब्दे तात्पर्यग्राहकान्तरानपेक्षेति लाघवमेवात्र बीजमिति सूचितम् । अत एव सुध्युपास्यशब्दे द्विधमेकयमित्युक्तं संगच्छते । कृञ्चानुप्रयुज्यते इति । तत्र ह्यामन्तस्य लिडंततया प्रकृतन्यायेनानुप्रयुज्यमानाः कृभ्वस्तयोपि लिट्परा एव भवन्तीति व्यर्थं कृञ्चानुप्रयुज्यते इत्यत्र लिड्ग्रहणमित्युक्तम् ॥ ॥ १२७ ॥

लिट्यभ्यासस्येति सूत्रे भाष्ये स्पष्टम् । फलान्तरान्यथा-सिद्धिरपि तत्रैव भाष्ये स्पष्टा । णौ च संश्चङोरित्यादौ संश्चङोरित्यादि विषयसप्तमीति तत्रापि न दोष इत्यन्यत्र विस्तरः ॥ १२८ ॥

यत्तु

**क्वचिद्विकृतिः प्रकृतिं गृह्णाति ॥ १२९ ॥**

तेन निसमुपविभ्यो ह्व इत्यत्र ह्वाग्रहणेन ह्वेञो ग्रहणसिद्धिः ॥ तथा

**औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ॥ १३० ॥**

तेन दादेर्धातोरित्यात्रौपदेशिकधातोरेव ग्रहणमिति, तन्न । तयोर्निर्मूलत्वाद् भाष्याव्यवहृतत्वाच्च । न च

---

इदं सिद्धमिति । विन्याधेत्यादि वच्यादिग्रह्यादुच्चदेश्यकसंप्रसारणविषयलक्ष्यं सिद्धमित्यर्थः । व्यर्थेति । नन्वेतदभावे भृष्ट इत्यत्र रमागमापत्तिः । जुहुवतुरित्यत्र संप्रसारणपूर्वरूपे बाधित्वा परत्वादातोलोपापत्तिः । शुशुवतुरित्यत्र संप्रसारणं बाधित्वेयङापत्तिरित्यत आह । अन्यथासिद्धिरिति । संप्रसारणस्य नित्यत्वेन पूर्वरूपस्यांतरंगत्वेन पूर्वं प्रवृत्त्या दोषाभावेनैतस्या वैयर्थ्यमिति भावः ॥ इत्यादावि ति । आदिना स्वापिस्यमिव्येञां यङीत्यस्य संग्रहः ॥ अन्यथा वेवीयतइत्यत्रांतरंगत्त्वात्संप्रसारणात्पूर्वं द्वित्वे उत्तरखण्डस्यैव संप्रसारणे ऽनिष्टरूपापत्तिरिति भावः ॥ १२८ ॥

विकृतिः प्रकृतिं गृह्णातीति गृहिज्येति सूत्रस्थभाष्येणाद्यायास्तिरस्काराच्च । निसमुपविभ्यो ह्वः इत्यादौ ह्वेञो ऽनुकरणे सौत्रः प्रयोगः। आत्त्वविषय एवात्मनेपदं प्रयोगस्थानामेवानुकरणस्य घुसंज्ञासूत्रे भाष्ये स्पष्टमुक्तत्वादित्यन्ये । अन्त्यापि तत्रतत्रोपदेशग्रहणं कुर्वतः सूत्रकृतो वार्त्तिककृतश्चासंमता । इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते यत्रास्यैतद्रूपमिति रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगं तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीतिकृत्वा द्वितीयः प्रयोग उपास्यते क उपदेशो नामेति घसंज्ञासूत्रस्थभाष्येण प्रायोगिकासंभवे तद्ग्रहणमित्यर्थस्य लाभेन भाष्यासंमता च ॥ भाष्ये सानुबन्धकेत्यादि प्रकृताभिप्रायेण । दादेरिति सूत्रे दादिपदस्यौपदेशिकदादित्ववति लक्षणेति न दोष इत्यन्यत्र विस्तरः ॥ १३० ॥

यदपि 'नन्वजर्घा बेभिदीतीत्यादौ तत्तद्गणप्रयुक्ता विकरणा यङ्लुकि स्युस्तथा यङ्लुकि बेभिदितेत्यादावेकाचइतीण्निषेधः स्यादत आह ॥

---

सौत्रः प्रयोग इति । अत्र सूत्रे शित्परकत्त्वाभावेन ह्वेञ आत्वे आतोधातोरित्याकारलोपे त्रेस्त्रय इत्यादौ घेर्ङितीति गुणे कृतेपि त्रिशब्दस्येवात्र ह्वेशब्दस्यैव बोधकत्वेन पाणिनितात्पर्यविषयत्वात्स्वंरूपमित्यनेन बोधकत्वेनाभिमतवृत्त्यानुपूर्वीमत एव ग्रहणेन ह्वेञो ग्रहणे बाधकाभाव इति भावः । औपदेशिकदादित्ववतीति । त्वद्रीत्यौपदेशिकधातोर्ग्रहणेन दामलिडादौ घत्ववत्तारणेप्यधोगित्यादौ घत्वानापत्तिर्दुर्वारैव । मम तु लक्षणादिनोभयत्रेष्टसिद्धिरिति बोध्यम् ॥ १२९ ॥ १३० ॥

**श्तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च॥ यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि॥१३१॥**

अनुबन्धनिर्देशो द्विधा स्वरूपेण ङित इत्यादिपदेन च । हन्तियातिवाति, सनीवन्तेति सूत्रे भरेति, दीङोयुडचि, अनुदात्तङितः, दिवादिभ्यः श्यन्, एकाच उपदेशे,इत्युदाहरणानि । द्वित्वं सनाद्यन्ता इति भूवादय इति धातुत्वं च भवत्येव गुणो यङ्लुकोरित्यादिभिर्निषेधानित्यत्वकल्पनात् । तेन भष्भावो ऽप्यजर्घा इत्यादौ भवति । अत एव श्वीदित इति सूत्रे कैयटे यत्रैकाज्ग्रहणं किंचिदिति पाठः ॥ एकाच उपदेशे ऽनुदात्तादिति सूत्र एकाज्ग्रहणेनैकदेशानुमत्यैषा ज्ञाप्यते । अन्यथोपदेशे ऽनेकाचामुदात्तत्वस्यैव सत्त्वेन तद्वैयर्थ्यं स्पष्टमेवेति' । तदपि न ॥ भाष्यानुक्तत्वात् । एकाज्ग्रहणस्य वधिव्या-

---

श्तिपाशपेति । इत्थंभूतलक्षणे तृतीया । श्तिब्विशिष्टं शब्विशिष्टमनुबंधविशिष्टं गणविशिष्टमेकाजिति बोधकं पदं च यत्र शास्त्रे उच्चारितमस्ति तानि पञ्चापि शास्त्राणि यङ्लुकि न प्रवर्तन्ते इति परिभाषार्थः । स्वरूपेणेति । दीङित्येवमनुबंधघटितरूपेणेत्यर्थः । प्रत्याहारेष्वनुबन्धसदृशोच्चारणेऽप्यनुबंधाभावात्तद्व्युदासः । अनित्यत्वकल्पनादिति । अत एव चोस्कुंदीतीत्यादाविदितोनुमिति नुम्, बोभुवतीत्यादावुवङिङ्च्चेत्यन्तादेशश्चेति बोध्यम् । वधिव्यावृत्त्यर्थमिति । अवधीदित्यादौ

वृत्त्यर्थमावश्यकत्वाच्च । न च वधिस्स्थान्युपदेशएकाजेवेति वाच्यम् । साक्षादुपदेशसम्भवेनैतद्विषये स्थान्युपदेशाग्रहणादुपदेशत्वावच्छेदेनैकाजित्यर्थाच्च । किं चोत्तरार्थमेकाज्ग्रहणम् । अत एव जागरितवानित्यादावनुपदेशउगन्तत्वमादाय श्र्युकः कितीतीण्निषेधो न । तत्रोपदेश इत्यनुवृत्तिश्च स्तीर्णमित्यादाविण्निषेधायेत्याकरे स्पष्टम् । न च भाष्ये यङ्लोपे बेभिदितेत्यादाविट्प्रवृत्त्यर्थमुपदेशेऽनुदात्तादेकाचः श्रूयमाणादङ्गादित्यर्थे सनीट्प्रतिषेधो वक्तव्यो बिभित्सतीति दोषोपन्यासवद्यङ्लुकि दोषानुपन्यासेन तत्रेडिष्टः । यङ्लोपेत्यादिभाष्यं तूपक्रमोपसंहारबलेन न यङ्लुग्विषयम् । किं च तस्य तद्विषयकत्वे यङ्लोपे स्थानिवत्त्वस्येव यङ्लुक्युपायाप्रदर्शनेन न्यूनतापत्तिरिति वाच्यम् । इड्विषये यङ्लुको लोकेऽनभिधानेन छन्दसि सर्वविधीनां वैकल्पिकत्वेन च तत्र दोषानुपन्यासेनादोषात् । अन्यथैकाज्ग्रहणं किमर्थमिति प्रश्नस्योत्तरत्र जागर्त्यर्थमिह वध्यर्थमित्युत्तरस्य च भाष्ये निरालम्बनत्वापत्तेः ॥ न चार्धधातुकाक्षिप्तधातोरेकाच इति विशेष-

---

वृद्धिवारणायादन्तत्वाश्रयणेनास्यानेकाच्त्वं स्पष्टमेवेति भावः । न चाच इत्येवैकत्वाविवक्षया तद्वतो ग्रहणेन च सामर्थ्याद्वधिव्यावृत्तिसिद्धावेकग्रहणघटितमेकाजिति पदमुक्तपरिभाषाज्ञापकमिति वाच्यम् । निरुक्तलक्षणायां बीजाभावात् सूत्रे एकवचनस्यातन्त्रत्वेनैकत्वाविशिष्टबोधकत्वाभावात् अजन्तेत्यर्थनिवारकत्वेनैकग्रहणस्य चारितार्थ्याच्चोक्तार्थज्ञापकत्वासंभवात् । निरालंबनत्वापत्तेरिति । एकाज्ग्रहणस्य यङ्लुग्व्यावर्त्तकत्वेन सफलत्वे उक्तप्रश्नोत्तरयोरसंगत्यापत्तेरित्यर्थः । के चित्तु वध्यर्थमित्यत्र

णम् । एवं च बिभित्सतीत्यादावुत्तरखण्डस्य धातोरेकाच्त्वमस्त्येव उत्तरखण्डे ऽस्तित्ववत् । एतच्च दयतेरिति सूत्रे भाष्ये स्पष्टम् ॥ एवं च प्रकृतभाष्यासङ्गतिरिति वाच्यम् । आक्षेपे आक्षिप्तस्यान्वये च मानाभावात् । अङ्गत्वं तु विशिष्टएवेत्येकाचो द्वे इति सूत्रे भाष्ये स्पष्टम् । निरूपितं च तनादिशेषे शब्देन्दुशेखरे । धातुत्वं तूत्तरखण्डएव । अत एवैकाचो बशो भषिति सूत्रे धातोरवयवस्यैकाच इति वैयधिकरण्येनान्वये गर्धप्रसिद्धिः प्रयोजनमुक्तं भाष्ये न तु प्रसिद्धमजर्घा इति । अजर्घा बेभिदीतीत्यादौ श्नम्श्यनादयस्तु चर्करीतं चेत्यस्यादादौ पाठेन यङ्लुगन्ते गणान्तरप्रयुक्तविकरणस्याप्राप्त्या न भवन्ति ॥ छान्दसत्वादेव कार्यान्तराणामपि छन्दसि दृष्टप्रयोगेष्वदृष्टानामभावो बोध्यः । भाषायां तु तादृशा-

---

वधिग्रहणं यङ्लुकोप्युपलक्षणमिति वदन्ति । अंगत्वं तु विशिष्टएवेति । द्वित्वनिष्पन्ने दयतेरितिसूत्रस्थभाष्यात्प्रकृतिवृत्त्यर्थवत्वव्याप्यधातुत्वादिधर्मातिदेशेपि प्रकृतित्वानतिदेशेन सैव च प्रकृतिराद्येति प्रत्यभिज्ञानात् द्वित्वोद्देश्यस्य प्रकृतित्वेन विशिष्टे तत्त्वं सुवचमिति भावः । अत एवेति । उत्तरखंडे एव धातुत्वसत्वादित्यर्थः । अजर्घा इत्यस्य प्रसिद्धत्वं त्वन्यत्रोदाहृतत्वाद् बोध्यम् । चर्करीतशब्दो यङ्लुगंतपरः । अत एव सप्तमे भाष्ये किरतिं चर्करीतांतमिति प्रयोग उपपद्यते । नार्थसाधका इति । तेषां भाष्याविचारितप्रयोजनकत्वेन पारायणादिना ऽदृष्टार्थसाधकत्वमेव कल्पयितुं युक्तमिति भावः । विस्तर इति । परे त्वत्र सूत्रे ऽज्वत इत्युक्तावप्युपदेशेनुदात्तस्यानज्वतो ऽप्रसिद्धेः सामर्थ्यात्तस्योपदेशावच्छेदेनैकाच इत्यर्थादुपदेशावच्छेदेनानुदात्तादित्यर्थाद्वा वधिव्यावृत्ति-

नामभाव एव श्तिपूशबादिनिर्देशास्तु भवतेर इत्यादिसूत्रस्थतन्निर्देशवन्नार्थसाधका इत्यन्यत्र विस्तरः ॥ १३१ ॥

ननु जभोचि, रधेश्च, नेट्यलिटीत्येव सूत्र्यतां किं द्वीरधिग्रहणेनेत्यत आह ।

पदगौरवाद्योगविभागो गरीयान् ॥ १३२ ॥

प्रतिवाक्यं भिन्नवाक्यार्थबोधकल्पनेन गौरवं स्पष्ट-

---

सिद्ध्यैकपदघटितमेकाजितिपदं व्यर्थं सदुक्तपरिभाषायां ज्ञापकम् । किं च यङ्लोपे बेभिदितेत्यादिभाष्ये यङ्लोपे दोषवारणाय स्थानिवत्त्वस्यैव यङ्लुक्युपायान्तरस्याप्रदर्शनेनेडागमस्य तत्रेष्टत्त्वावगत्योक्तपरिभाषाया भाष्याभिमतत्त्वमेव । इड्विषये यङ्लुको लोके ऽनभिधानकल्पने तु न मानम् । किं च तस्य छांदसत्वेपि छांदसरूपसाधकान्यप्रमाणप्रणयनवदेतत्त्परिभाषारूपप्रमाणाभ्युपगमे बाधकाभावः । किं च यङ्लोपइति भाष्ये यङ्लुक्युपायाप्रदर्शनरूपन्यूनतापत्तिपरिहाराय यङ्लुगंतेड्विषयलक्ष्याणां लोकेनभिधानकल्पनापेक्षया परिभाषाया भाष्याभिमतत्त्वकल्पनाया एव न्याय्यत्वम् । किं चैकाच इति सूत्रशेषे भाष्ये आद्युदात्तनिपातनस्वरस्य प्रकृतिस्वरबाधकत्वकल्पनेन वधिषीष्टेत्यादावुपदेशेनुदात्तत्वाभावेन निषधाविषयत्वोक्तावपि सूत्रे एकाज्ग्रहणस्य फलांतराप्रदर्शनेन तस्य यङ्लुग्व्यावर्तकत्वमेव भाष्याभिमतमिति स्पष्टमेव । किं च तत्तद्गणप्रयुक्तश्यन्नादिवारणमप्यशक्यं यङ्लुगंतस्यादादौ पाठस्य भ्वादियङ्लुगंतप्रकृतिकशपो निवर्तनेन चारितार्थ्यात् । यङ्लुकच्छांदसत्वकल्पनया तत्तत्कार्यवारणं तूक्तयुक्त्या ऽयुक्तमेवेति प्राहुः ॥ १३१ ॥

गरीयानिति । अतिशयगौरवविशिष्ट इत्यर्थः । गौरवस्य क्लेशजनकत्वेन हेयत्वं लोकप्रसिद्धमिति नाप्यूहेयमिति बोध्यम् । गौरवमेवोपपादयति । प्रतिवाक्यमिति । प्रत्येकं भिन्नसामग्र्या अपेक्षितत्त्वात्तस्यां

मेव। परन्तु भाष्यासम्मतेयम् । टाङसीति सूत्रस्थभाष्यविरुद्धाच। तत्र च इनादेशे इकारप्रत्याख्यानं योगविभागेनैव कृतमिति बहवः॥ १३२॥

## अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः॥ १३३॥

एओङ्ऐऔच्सूत्रयोर्ध्वनितैषा भाष्ये । तत्रानेकपदघटितसूत्रे प्रायेण पदलाघवविचार एव न तु मात्राला-

---

चानेकपदार्थसंमेलनावश्यकतया गौरवं स्फुटमेवेत्यर्थः। भाष्यासंमतेति । ईदृशगौरवस्य कुत्रापि तेनानुक्तेरिति भावः। नन्वप्रतिषिद्धमिति न्यायात् लोकसिद्धाया अस्या भाष्यानुमतत्वमित्यत आह । टाङसीति । बहव इति। परे तु तद्भाष्यमेकदेश्येव। अत एव ऋलक्सूत्रादौ भाष्यकृता कृतं महतो वंशस्तंबाल्लट्वानुकृष्यत इत्यनेन स्वल्पगौरवस्य महता क्लेशेन वार्तिककृता कृतस्य परिहारस्यावहेलनं संगच्छते । किं च वर्णगौरवाद्योगविभागगरीयस्त्वस्योक्तभाष्यविरुद्धत्त्वेपि निरुक्तपरिभाषायां लोकसिद्धायां भाष्यविरोधाभाव इति वदन्ति॥ १३२॥

अर्धमात्रालाघवेनेति। हेतावेषा तृतीया । अर्धमात्रालाघवजन्यमुत्सवं पुत्रोत्सवसदृशं मन्यन्ते। पुत्रोत्सववत्सन्तुष्यन्तीत्यर्थः। अन्ये तु प्रकृत्यादित्त्वादेषा तृतीया । अर्धमात्रालाघवाभिन्नं पुत्रोत्सवं पुत्रजन्मरूपं सुखजनकं व्यापारं मन्यन्ते इत्यर्थः। तथा च विशिष्टसुखजनके पुत्रजन्मरूपे व्यापारे अर्धमात्रालाघवाभेदबोधने तादृशसुखजनकत्वमुक्तलाघवस्यार्थात्सिध्यति ॥ किं चात्रापिशब्दशेषेणार्धमात्रालाघवेनापि पुत्रोत्सवं वैयाकरणा मन्यन्ते किमुत ततोऽधिकलाघवेनेति कैमुतिकन्यायेन मात्रादिकृतलाघवस्यादरणीयतामाहुः । ध्वनितैषेति । कैमुतिकन्यायसूचितार्थविशिष्टेत्यर्थः। तत्र हि संध्यक्षरेषु तपरोपदेशाभावे एचो ह्रस्वानुशासनेषु अर्धैकाराधौंकारयोर्वारणार्थमेचइग्घ्रस्वादेशइति सूत्रं कर्तव्यमि-

घवविचार इति ऊकालोच्, अपृक्त एकालित्यादिसूत्रेषु भाष्ये ध्वनितम् । तत्र हि सूत्रे अल्ग्रहणहल्ग्रहणयोर्विशेषविचारे संज्ञायां हल्ग्रहणं ण्यक्षत्रियेतिसूत्रे अणिञोरिति वाच्यमिति त्रीणि पदान्यल्ग्रहणे तदेकं स्वादिलोपे हल्ग्रहणं ण्येतिसूत्रे अणिञोरिति न वाच्यमपृक्तस्येति वाच्यमिति त्रीण्येव पदानीति नास्ति लाघवकृतो विशेष इत्युक्तम् । अचि श्नुवति सूत्रे इण इत्येव सिद्धे य्वोरिति संमृद्य गृहणान्न पूर्वेणेण्गृहणं तत्र विभक्तिनिर्देशे संमृद्य गृहणे च सार्धास्तिस्रो मात्रा इण्गृहणे तिस्रो मात्रा इति लण्सूत्रे भाष्योक्तेः, तथा ओतश्श्यनीति सूत्रे शितीति वक्तव्यम् । तत्रायमर्थः । छिवुक्ल-

---

त्युपक्रम्य यदि हि तौ स्यातां तावेवायमुपदिशेदित्युक्तम् । तथा च प्रत्येकमेङ्च्येकमात्रालाघवानुरोधेन तावेवायमुपदिशेदिति वदता भाष्यकृतैतदर्थः सूचित इति स्पष्टमेव । इत्यादिसूत्रेष्विति । आदिना प्रत्ययस्य लुक्श्लुलुप एओङ् ऐऔजित्यस्य परिग्रहः । इत्युक्तमिति । अन्यथा मात्रालाघवकृतविशेषस्य सत्त्वात्तदसंगतिः स्पष्टैव । के चित्तु संज्ञाशब्दानां सार्धमात्रिकत्वेन मात्रालाघवकृतविशेषाभावाडुक्तयुक्त्या पदलाघवकृतविशेषाभावाच्च लाघवकृतविशेषाभावोपपादनप्रयुक्तविरोधाभावेनाचिश्नुवतिसूत्रोक्तभाष्यविरोधेन चानेकपदघटितसूत्रेषु मात्रालाघवविचारो नास्तीत्युक्तमयुक्तमेव । अपृक्त इति सूत्रमेव सार्धमात्रिकत्वं संज्ञानामित्यत्र मानम् । ऊकाल इति सूत्रे पदगौरवप्रदर्शनेन मात्राकृतगौरवस्यापि स्पष्टमुक्तप्रायतया पृथङ् नोक्तमिति न तद्विरोधलेशोऽपि । अनुगमप्रस्तावे प्रायपदनिवेशनं तु तदसामर्थ्यबोधनमेवेति प्राहुः । संमृद्यग्रहणादिति । आदेशेन स्थानिनौ निवर्त्य य्वोरित्यादेशरूपेण ग्रहणादित्यर्थः । इण्ग्रहणे तिस्रो मात्रा इति । य्वोरित्यस्य स्थाने इण इत्युच्चारणे इण इयङु-

म्विति सूत्रे शितीति न कर्तव्यं भवतीति भाष्ये न केवलं मात्रालाघवं यावदयमप्यर्थ इति कैयटोक्तेः प्रायेणेति शिवम् ॥ १३३ ॥

इति श्रीमन्महामहोपाध्यायशिवभट्टसुतसतीगर्भज-
नागोजीभट्टकृतः परिभाषेन्दुशेखरः समाप्तः ॥

---

बङ्गावित्यत्र रुत्वयत्वयलोपेषु तु सार्धमात्राद्वयमिति बोध्यम् । अयमपीति । अयमर्धमात्रालाघवरूपः । अपिना पदलाघवपरिग्रहः । तथा च कौमुतिकन्यायबोधितपुत्रोत्सवाद्यनेकफलदातृत्वेनाभ्यर्हितत्वात्प्रथमं पदलाघवविचारस्तदसंभवे मात्रालाघवविचारोऽप्याश्रीयते यतः पुत्रोत्सवादिनाभीष्टसकलार्थसिद्धिः ॥ १३३ ॥ ॥ इति तृतीयं प्रकरणम् ॥

वेदबाणाङ्कवसुधावैक्रमेब्दे गुरोर्दिने ।
भाद्रे भूततिथौ भूतिः सिते संपूर्णतामगात् ॥ १ ॥

माता श्रीगोपिकाख्या स्म भवति जनकः श्रीमहादेवशर्मा
पूज्यः श्रीबालशास्त्री विबुधनृपनुतो ऽभूद् गुरुर्यस्य मुख्यः ॥
तात्येत्याख्या द्वितीया सकलजनमता यज्जनिः काशिकायां
सोऽयं श्रीरामकृष्णो गुरुजनदयया पूजितो ऽभूद् बुधेषु ॥ २ ॥

भूतिं यां पटवर्द्धनेतिकुलजाख्यो दाक्षिणात्यो द्विजः
संपाद्यैव मुदे सदा चरणयोः शम्भोरिमामार्पयत् ॥
तामेनां स्वमुखे दधाति हृदि वा प्रीत्या प्रसादेन य-
स्तस्य स्याच्चु विवादिभूतजनिता बाधा कदापीह न ॥ ३ ॥

इति श्रीपटवर्धनोपनामकतात्याशास्त्र्यपरनामधेयेन
रामकृष्णशास्त्रिणा विरचिता भूतिनाम्नी
परिभाषेन्दुशेखरव्याख्या समाप्ता ॥

श्रीभवानीशंकरार्पणमस्तु ।

# विक्रीके पुस्तकों की सूची ।

श्रीमत्पतञ्जलिकृत संपूर्ण व्याकरण महाभाष्य कैयट कृत प्रदीप, न
न्हिकभाष्योद्द्योत और श्रीमद्विद्वद्वर बालशास्त्रिकृत टिप्पणी सहित १

श्रीभगवत्पतञ्जलिकृत महाभाष्य का नवान्हिक, कैयटकृत प्रदी
भाष्योद्द्योत नामकटीका और श्रीमद्बालशास्त्रिकृत टिप्पणी सहित २

नागोजीभट्ट कृत परमलघुमञ्जूषा ।

कौण्डभट्ट कृत वैयाकरणभूषणसार ।

श्रीगदाधर भट्टाचार्य कृत प्रतिबन्धकतावाद

श्रीनागोजी भट्ट कृत लघुशब्देन्दु शेखर संपूर्ण ( टाईप जिल्द )

ऋग्वेद संहिता ( बंबईकी ) ४

दिनकरी मुक्तावली की टीका १

नवान्हिक विवरण १

अमरुशतक वेदान्त और शृंगार पर टीका सहित ॥२

कारिकावली मुक्तावली दिनकरी रामरुद्री सहित २

प्रायश्चित्तशूलपाणि २

लघुत्रिस्थलीसेतु

तन्त्राधिकार निर्णय भट्टोजीदीक्षित कृत, इस में तप्तमुद्राधारणादि अनेक पाखण्ड मत का खण्डन है । ।२

देवीगीता सटीक [ मन्त्रशास्त्र ] १

कर्पूरस्तवराज सटीक ,, ।२

दीक्षातत्त्व प्रकाश ,, १

कालीपञ्चाङ्ग ,, ।

शारदातिलक राघवभट्टी नामक बृहट्टीकासहित ४

इस से अन्य जो २ पुस्तक अपेक्षित हो वे नीचे लिखे हुये पत्ते से मं
गा लीजिये आध आने का टिकट आने से वडा सूची पत्र मुफ्त भेजा जायगा

मैनेजर, राजराजेश्वरी प्रेस,
दुर्गाघाट काशी ।